# विषय-सूची





**गुरुकुल-पत्रिका का वार्षिक मूल्य—**

देश में – ४ रुपये, विदेश में – ७ रुपये, एक प्रति – ४० पैसे

ओ३म्

# गुरुकुल-पत्रिका

[ गुरुकुलकांगड़ीविश्वविद्यालयस्य मासिक पत्रिका ]

भाद्रपदः, २०३०, सितम्बर १९७३, वर्षम्-२६, अङ्कः १ पूर्णाङ्कः २९७

## श्रुति सुधा

सत्यामाशिषं कृणुता वयोधैः कीरिं चिद्ध्यवथ स्वेभिरेवैः ।
पश्चा मृधो अप भवन्तु विश्वास्तद् रोदसी शृणुतं विश्वमिन्वे ॥

ऋ. १०।६७।११

हे देवो ! तुम हमारी (आशिषं) इच्छाओं को (वयोधैः) अपने दिव्य अन्नों को धारण कराने के द्वारा (सत्यां कृणुता) सच्ची करो । और (कीरिं) इस मुझ स्तोता को (स्वेभिः एवैः) अपने गतिशील प्रयत्नों से (चित् हि अवथ) अवश्य रक्षा करो । और हमारे ( विश्वा मृधः पश्चा अप भवन्तु) सब शत्रु पीछे रह जायें। (विश्वमिन्वे) सबको तृप्त करने वाले हे ( रोदसी ) द्यावा-पृथिवी तुम मेरी प्रार्थना को (शृणुतम्) सुनो ।

अप ज्योतिषा तमो अन्तरिक्षादुद्नः शीपालमिव वात आजत् ।
बृहस्पतिरनुमृश्या वलस्याभ्रमिव वात आ चक्र आ गाः ॥

ऋ. १०।६८।५

(वातः उद्नः शीपालमिव) जिस प्रकार वायु जल से शैवाल (काई) को दूर कर देती है, उसी प्रकार वह बृहस्पति (ज्योतिषा) अपनी ज्योति द्वारा ( अन्तरिक्षात् ) शिष्य के हृदय रूपी अन्तरिक्ष से (तमः अप आजत्) अन्धकार को दूर कर देता है । (वातः अभ्रमिव) वायु जिस प्रकार बादलों को घेर लाती है उसी प्रकार वह बृहस्पति (वलस्य गाः) वलासुर के कब्जे में आती हुई गौओं को (अनुमृश्य) तीव्र चिन्तन द्वारा (आचक्रे) बाहिर की ओर घेर लाता है ।

# चारुचरितामृतबिन्दुः

( हुतात्मनां द्वादशार्यवीराणां संस्कृतपद्यनिबद्धं जीवनचरित्रम् )

निबद्धा—हजारीलाल शर्मा ( विद्यालंकारः )

## परम तपस्वी श्री विरजानन्दः (१)

भो भो विचाररसिका विबुधा भवन्तो
मात्सर्यदोषमपसार्य विचार्य पूर्वम् ।
मेधाव्रतेन विदुषा दिवलोकभाजा
निर्मापितं सुचरितं विदुषां पठन्तु ॥१॥

संप्रस्तुतस्य खलु संस्कृत गद्यभागे-
ष्वार्यप्रकाण्डविदुषां चरितस्य विज्ञाः !
पद्यात्मकं सुविशदं त्वधुनानुवादं
मन्निर्मितं प्रपठतां हृदि चेतना स्यात् ॥२॥

मान्याः ! सुचारुचरितामृतपुस्तकस्य
गद्यैः सुसंस्कृतमयैः परिमार्जितस्य
मेधाव्रतेन विदुषा रचितस्य चाहं
पद्येषु संस्कृतमयीं रचनां करोमि ॥३॥

श्री दण्डिनः सुविदुषो विरजार्यनन्द-
स्यार्यस्य चारुचरितं विवृणोमि पद्यैः ।
यत्कीर्तनश्रवणचिन्तनभावनाभिः
स्यादार्यवीरजगति प्रगति र्जनेषु ॥४॥

योऽसौ च पञ्चनददेश सुमध्यवर्ति
कर्तारनामकपुरं समलञ्चकार ।
सारस्वतस्य विदुषः सुगृहे द्विजस्य
नारायणस्य सुमहोत्सवपुण्यरूपः ॥५॥

पञ्चाब्दके त्वतिभयंकरशीतलेति
रोगेण नेत्रयुगलं द्युतिहीनमासीत् ।
संप्रस्तुतस्य विदुषः खलु सूरदास-
नामाभवद्, विबुधवृन्दसुपूजितस्य ॥६॥

वर्षेष्टमे स्वगृहएव पपाठ शब्द-
शास्त्रं च किञ्चिद्गते समये ह्यमुष्य ।
यातौ दिवं सुपितरौ स्वसहोदरस्य
भ्रातुः समीपमनयत् समयं स्वकीयम् ॥७

हाऽसौ सहोदरमहाधमभार्यया च
संत्रासितो बहुविधं बहु दुःखितोऽभूत् ।
त्यक्त्वा गृहं तु विमना हृषिकेशधाम
यातो मुदा स्व हृदये हरिमारराध ॥८॥

वर्षत्रयं सुरधुनीजलमध्यवर्ती
मन्त्रं जजाप मनसा प्रणवं तपस्वी ।
निर्माय पर्णकुटजं निवसन् महात्मा
वन्यैः फलैरुदरपूर्तिमसौ चकार ॥९॥

हा ! चैकदा त्वृषिवरस्य कुटीरमेको
वन्यः पशु र्निशि बभञ्ज तपश्चरस्य ।
आकाशतो ध्वनिरभूच्चमुनीश्वर ! त्वं
ह्यन्यत्र याहि भवितव्यमिदं विचार्य ॥१०॥

आकाशवाणीमवगम्य महर्षिवर्यः
सद्यो गतः कनखलं नगरं प्रसिद्धम् ।
तत्रत्य सिद्धपुरुषस्य यतेः सकाशात्
पूर्णाश्रमस्य सविधे जगृहे सुदीक्षाम् ॥११

सन्यासदीक्षमभवं सुगृहीतनाम
दध्रे हृदा यतिवरो विरजार्यनन्दः ।
भट्टोजि दीक्षित कृतं किल शब्दशास्त्रं
चाधीत्य यात ऋषिरीश पुरीं प्रशस्ताम् ॥१२

काश्यामसौ पठनपाठनकार्यभारं
सानन्दमार्यपुरुषः सहते स्म धीरः ।
सम्मानितो बहुतिथं बहुमानपूर्वं
पश्चादगाद् गयपुरीं बहुतस्कराढ्याम् ॥१३॥

मार्गे तु तस्करगणार्दित आर्य वीरो
ग्वालीयरस्य नृपतेः परिरक्षकेण ।
संरक्षितः सुरगिरा ह्युपदिश्य लोकान्
ग्वालीयरेशनृपति निजशिष्यमाधात् ॥१४॥

हित्वा गयां पुनरसौ गतवांश्च सौरं
स्थानं तु शूकर सुतीर्थपराभिधानम् ।
तत्राङ्गदादिबुधसेनजनानपाठीद्
य त्स्थानमाप गढिघट्टपद प्रसिद्धम् ॥१५

तत्रागतोऽलवरराज्यनरेश आर्यः
शिष्यत्वमाप्य विरजं स्वगृहे निनाय ।
होरात्रयं प्रतिदिनं प्रपठन् नरेशो
जातोऽद्भुतो झटिति पण्डितमण्डलाढ्य ॥१६

राज्ञोऽवरोधवशतो विरजार्यनन्दो
दण्डी मुदा प्रणिनिनाय च शब्दबोधम् ।
ग्रन्थः स्वहस्तलिखितस्त्वधुनापि राज्य-
ग्रन्थालये परिवृढो नितरां विभाति ॥१७॥

मूर्खान् जनानपि नृपो बहु सत्करोति
नायाति कार्यवशतः समयेऽपि चासौ ।
ज्ञात्वा यति स्त्वलवरे त्रिचतुर्षु वर्षे-
ष्वार्यो वसन् पुनरगाद् निजसौरधाम॥१८।

तत्रापि सूकर–सुतीर्थजलानुकूलं
नाभूदतो भरत नाम पुरं जगाम ।
तत्रत्य भक्तवरभूपतिना सुमान्यः
कालान्तरे यतिवरो मथुरामयासीत् ॥१९॥

योगी महान् गुणनिधि विरजार्यनन्दो
ह्यस्थापयज्जनहिताय सुपाठशालाम् ।
या चाद्य हन्त ! मथुरायमुनातटस्थ
विश्रान्त घट्ट पथि भग्नदशामुपास्ते ॥२०॥

पूर्वन्तु यत्र लघु-शेखर-चन्द्रिकाद्या
ग्रन्था ह्यपाठिषत पण्डितमण्डलेन ।
किन्त्वद्य वीरपुरुषेण यतीश्वरेण
भाष्यादिपाठपठनस्य विधिः प्रदिष्टः ॥२१

यः प्रत्यहं प्रियवराद् वनमालिशिष्यात्
पातञ्जलं समश्रृणोत् कठिनं च भाष्यम् ।
रात्रौ पुनर्यतिवरो मननं तदीयं
कृत्वा स्मृतेः पथमधात् सकलार्ष विद्याम्॥२२

यद् यत् सुशिष्य मुखतः श्रृणुते स्म पाठं
तत् तत् सुपाठयति शिष्यगणं यतीन्द्रः ।
तत्कालतः समजनिष्ट यतेः सुचित्तेऽ-
नार्षीयशिक्षणविधौ नितरां विरक्तिः॥२३॥

धन्यो महान् यतिवरो विरजार्यनन्दो
यस्येदृशी परमपावनबुद्धिरासीत् ।
आजीवनं प्रकुरुते स्म मुदा प्रचार-
मार्षीयपद्धतिविधेः सततं सुधीन्द्रः॥२४॥

स्त्रुघ्नेति नाम नगरे विक्टोरियाया
राज्ञाः समक्षमभवत् सुसभा पुरैका ।
तस्यां तु राजसदसि प्रवरो मुनीनां
सर्वान् स्वभाषणसुधावचनैर्मुमोह ॥२५॥

कालान्तरे यतिवरस्य समीपमेकोऽ-
ध्येतुं मुदा गुणनिधिः समुपस्थितोऽभूत् ।
तन्मेधया प्रखरया बहुविस्मितोऽसौ
तस्मै ददौ गुरुवरः सकलार्षविद्याम् ॥२६॥

दयानन्दनाम्ना प्रसिद्धो यतीन्द्रो-
ह्यसावेव वेदादिधर्मप्रचारम् ।
रामस्ते च लोके चकारार्यवीरो
निदेशाद् गुरोः कीर्तिमार्यो वितेने ॥२७॥

एकोनविंशतितमे शतके च पञ्च
विंशाधिके यतिवरो ननु वैक्रमीये ।
यश्चाश्विनस्य शुभकृष्णदले शिवस्य
तिथ्यां स्वदेहमजहात् स तु वन्दनीयः॥२८॥

( क्रमशः )

# महाकविश्रीकालीदासगौरवम्

डा० अमरनाथ पाण्डेयः, संस्कृत–विभागाध्यक्षः,
काशीविद्यापीठम्, वाराणसी

यया पूता लोका विविधचरितालीभिरनिशं
परिष्कारं नीता विबुधविसरैर्या च सुषमा ।
लसन्ती पुष्टाङ्गैर्भरतकुलसेव्या च जननी
महोभिः सौख्यं सा वितरतु जनेभ्यः सुरगिरा ।।१।।

कालिदासेन या सृष्टिः समृद्धा खलु कल्पिता ।
नितान्तं कुरुते व्यक्तिं नवैः शब्दार्थविस्तरैः ।।२।।
अलंकारैः कथा सान्द्रा प्रसङ्गैर्मधुरा सिता ।
अलोलैः पात्रसंयोगैः प्रसन्ना ननु राजते ।।३।।

रसस्य परमः पोषः प्रणीतः रुचिरं कृतौ ।
प्रभेदैः सूक्ष्मविन्यासैः कवित्वं बहु मन्यते ।।४।।
कालिदासस्य सूक्तीनां माधुर्यं प्रथितं बहु ।
ताभिरत्यन्तमार्द्राभिर्निबद्धं चारु कल्पनम् ।।५।।

रहस्यं निगमे गूढं विमृश्य स्थापितं स्थले ।
अधीतं पण्डितैः सम्यक् समग्रं प्रतिभाधनैः ।।६।।
विशाला प्रकृतेः शाला सचित्रा भ्राजते कवेः ।
नृणामाह्लादने सक्ता विरक्ताऽलस्यवर्धने ।।७।।

नाट्यशास्त्रप्रवीणेन प्रसिद्धिः कलया धृता ।
अवाप्तं चारु वैदग्ध्यं नवीनैः पात्रचित्रणैः ।।८।।
वर्णनानि विचित्राणि प्रथन्तेऽजस्रमद्भुतम् ।
विशेषा आहिताः सर्वे समं निर्माणकौशलैः ।।९।।

शिवतत्त्वं हृदि ध्यात्वा प्रमोदं परमं गतः ।
तदेव प्रमुखं गातुं विकीर्णो रत्नसञ्चयः ।।१०।।
शिवदृष्टेः समासङ्गो विविक्तस्तत्र कल्पितः ।
महार्घं ध्यायते नित्यं समर्थं काव्यसौष्ठवम् ।।११।।

अभिज्ञानेन संशुद्धं समाजे विदुषां हितम् ।
पवित्रं चीयते विज्ञैः कवित्वं खलु निर्मलम् ।।१२।।

प्रसङ्गाः सञ्चिताः काव्ये रहस्यैर्दर्शनाङ्कितैः ।
बुधानां बोधनायैव समीपं यान्ति सत्वरम् ।।१३।।

अभिज्ञाने च मेघे च कुमारे सम्परीक्ष्यताम् ।
कथाभिर्वर्णनाभिश्च विमृष्टैर्वृत्तपल्लवैः ।।१४।।

निवृत्तेः प्राप्तिराख्याता कृतौ सन्मार्गसंस्तवैः ।
विमार्गं संश्रिताः पान्थाः प्रणाली सम्प्रकाश्यते ।।१५।।

पेशलत्वं पदालीनां मृदुत्वं कल्पनाततेः ।
प्रसादो भावसार्थानां समग्रे लसति स्थले ।।१६।।

कवित्वे कमनीयत्वं महत्त्वं लभते ध्रुवम् ।
स्वदेशे शस्यते दासो विदेशे शस्यते सदा ।।१७।।

गेटेप्रभृतयो धीरा नुवन्ति प्रवरं कविम् ।
लिखन्ति श्लक्ष्णभावार्द्रां प्रशस्तिं स्वान्तवल्लभाम् ।।१८।।

प्रौढिं संसूचयन्तः सरसरचनया भावयन्तः कवीन्द्रान्
विन्यासैः कल्पनानां गुणगरिममितैर्बोधयन्तः सुधीन्द्रान् ।१९।

व्याख्यानैस्तत्त्वगर्भैरमितनययुतं ज्ञानराशिं किरन्तः
काव्यं स्वच्छं दधाना जगति परिचिताः कालिदासस्य सर्गाः ।।
।२०।।

# विदेशीयसंस्कृतविदुषां संस्कृते प्रयोगलाघवम्

( कोरिया देशवासिनः संस्कृतभाषाकोविदस्य श्री वाक्कन्बे महानुभावस्य गीर्वाणवाण्यां लिखितं पत्रं केन्द्रीयकृषिराज्यमन्त्रिणा प्रो० शेरसिंहमहोदयेन प्रहितोऽस्य प्रत्युत्तरश्च पाठकानां सूचनार्थमविकलमुद्रिध्रयते--सम्पादकः)

## श्री वाक् कन्बे महानुभावस्य पत्रम्

स्वस्ति ।

श्रीकोरियादेश-भारतवर्षयोः स्वतन्त्रतादिवसपुरोगराधाजानिजन्माष्टमी महाभिनन्दनम् ।

निजनिजदेशभक्तिपरायणसमग्रजनतामनोह्लादिनि मंजुलमंजुलनैसर्गिकाकृतिसुषमाऽनाया-सपरिमुषितसकललोकलोचनस्यासंशयमनिवार्यराष्ट्रीयनियतिवशग्रस्तत्वादहो सततक्षमणीयाक्रमणशील-बलीयोविदेशद्वाराऽष्टाविंशतिसंवत्सरानपि सुतरां दुर्विषहत्वान्नूनं हायनशतायमानान् प्रसह्य द्वैधीकृत-स्यापि सर्वथा स्पृहणीयश्रीसंपद्विराजितस्यातिमनोहरसौहार्दकीभूतैकवर्णप्रजासमूहविधीयमानरम्यवसतेः श्रीकोरियादेशस्य च भारतवर्षस्य च तुहिनाचलवदचलत्वाच्चिरस्थायिनः स्वातन्त्र्यवासरे सोऽयम-धस्तात्स्वयंदत्तस्वहस्तः श्रीबाक्कन्बे नाम श्लाध्यप्रगुणगुणराशिं शुभंकरसौभाग्याभ्युदयशालिनं विशेषतो समस्तभारतनिवासिलोकहितैषिणं सुकृतिनं भवन्तं भारतीयराज्यमंत्रिणं श्रीमच्छेरसिंहम-हाभागमनामयमनुपमं निर्व्याजप्रीतिपूर्वकं संपरिपृच्छन्नचिरभाविनि सनातनधर्मनिर्दिष्टमागमिनुयायिनाम-त्त्यानां सर्वेषां हृदयमहोत्सवदायिनिजन्माष्टमी प्रसंगे ननु सुपरिगृहीतस्वजन्मा भगवद्गीतायां-'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत, अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम्, परित्राणाय साधूनां विनाशाय च दुष्कृताम्, धर्मसंस्थापनार्थाय संभवामि युगे युगे' इति सव्यसाचिनं सोपदेशमूचिवान् देवकीनन्दनो वासुदेवो मनसि समभिलषितमायुष्यं यशस्यमपि पुनः सार्वकामिनं मंगलपुंजं ते यथेच्छं वितरत्विति सौहार्दात् खल्वाशास्ते । इतिशम् ।

## केन्द्रीयकृषिराज्यमन्त्रिणा प्रो० शेरसिंहमहोदयेन प्रदत्तः प्रत्युत्तरः

'अधिगतमस्माभिर्भवतां १५-अगस्त ७३ तिथ्यङ्कितं पत्रम् । प्रीतोऽस्मि नितरामालोक्य भवतां गीर्वाणवाणीनैपुण्यमेतच्चानुदिनं वर्द्धतेतरामिति महानयमस्मादृशामानन्दस्य विषयः । धन्य-वादार्हाः भवन्तोऽस्माकमायुष्यं यशस्यं च कामयमानाः । भवतामपि तथाविधं भवतु । आशास्महे भवद्विधानां कोरियादेशविदुषां प्रयासैरनिशं वर्द्धिष्यते मैत्रीसम्बन्ध आवयोरुभयोर्देशयोः । कामये भवतामनामयं सारस्वततपोवर्द्धनंचाहर्निशम् । स्वस्ति ।'

राज्य मंत्री, कृषि मंत्रालय, भारत सरकार निजी सचिव,

---०---

# वैदिक-साहित्य-सौदामिनी

श्री वागीश्वरो विद्यालंकारः साहित्याचार्यः

एवमभिधायाः स्वरूपमभिधाय सम्प्रति प्रसङ्गप्राप्तां लक्षणां लक्षयति--

विवक्षितार्थनिष्पत्त्यै शक्यसम्बन्ध्युपस्थितिः-
यया सा लक्षणावृत्ति द्वितीया सहजेतरा ।।१६६
अभिधेयार्थबाधे तु योग्यताविरहादिना
क्रियते लक्षणा, तस्या हेतू रूढिप्रयोजने ।।१६७

गङ्गायास्तटे घोषः इति कथनेन तटे विवक्षितस्य घोषनिष्ठस्य यस्य शीतत्वपावनत्वादे-[१] स्तदतिशयस्य[२] वा नाऽवगमस्तत्कृते शक्यस्य=गङ्गापदेनाऽभिधाशक्त्या प्रतिपाद्यस्य तदीयप्रवाहरूपस्यार्थस्य सामीप्यादिसम्बन्धसम्बन्धी तटरूपोऽर्थः शब्दस्य यया वृत्त्या[३]=गङ्गादिपदस्य येन व्यापारेणोपस्थाप्यते सा लक्षणा । इह गङ्गापदश्रवणाज्जातो वाच्यार्थोपस्थिति ( स्मृति ) स्वरूपः श्रोतुर्मानसो व्यापारोऽपि शब्दे उपचरितः । गङ्गापदात्तदीयप्रवाहरूपोऽर्थोऽभिधया[४] शक्त्या प्रथमं बोध्यते । तत्र घोषाऽधिकरणत्वयोग्यताविरहात् मुख्यार्थबाधे तत्सम्बन्धी तटरूपो द्वितीयोऽर्थस्तदनन्तरम् । तस्मादियं द्वितीया वृत्तिः । इयं सहजेतरा =न नैसर्गिकी । अभिधां केचिदीश्वरोद्भावितां मन्यन्ते, लक्षणां तु न तथा । इयं वाच्यस्य=मुख्यार्थस्य बाधे=योग्यतादिविरहादन्वयाऽनुपपत्तौ भवति। गङ्गायां घोषः इत्यत्र प्रवाहाऽधिकरणा आभीरपल्ली न संभवतीति वाक्येऽन्वयाऽनुपपत्ते मुख्यार्थबाधः। ततश्च गङ्गापदेन गङ्गाप्रवाहसंयुक्तस्य तदीयतटरूपस्यार्थस्य ग्रहणे गङ्गातटाऽधिकरणाऽऽभीरपल्लीति प्रत्ययो लक्षणया जायते । अन्ये काकेभ्यो दधिरक्ष्यताम्, इत्यादौ काकपदेन केवलवायसरूपार्थाऽभिधाने मुख्यार्थबाधाऽभावान्न लक्षणा । किन्तु वक्तुस्तात्पर्यविषयीभूतेऽपि बिडालादिभ्यो दधिरक्षणेऽप्राप्ते तात्पर्याऽनुपपत्त्या लक्षणामङ्गीकुर्वन्ति । तया च सर्वेऽपि दध्युपघातका बिडालादयो लक्ष्यन्ते । इदमसहमानाः पूर्वे काकपदेन काकेतरबिडालादिरूपार्थग्रहणे मुख्यार्थबाधाद् दध्युपघातकत्वसम्बन्धेन सर्वेऽपि बिडालादयो लक्ष्यन्ते, तत्र काकपदाऽभिधेयस्य काकरूपस्य

---

१. गङ्गायास्तटे घोषः इत्यादेः प्रयोगाद् येषां न तथा प्रतिपत्तिः, तेषां पावनत्वादीनां धर्माणां तथा प्रतिपादनात्मनः प्रयोजनाच्च मुख्येन अमुख्यार्थो लक्ष्यते । काव्य प्रका० उल्ला०२।।

२. उत्तरत्र गङ्गातटे घोषः इति प्रतिपादनादलभ्यस्य शीतत्वपावनत्वातिशयस्य बोधनरूपं प्रयोजनम् सा. द.। परि.२। कारि ३८ ।

३. वृत्तयः अभिधालक्षणाव्यञ्जनादयः शब्दव्यापाराः । तदुक्तम् - वृत्तीनां विश्रान्तेरभिधातात्पर्यलक्षणाख्यानाम् । अङ्गीकार्या तुर्या वृत्ति र्बोधे रसादीनाम् ।। सा. दर्प. परि. ५। कारि. १।।

४. शक्तिः अभिधा । तया प्रतिपादितोऽर्थः शक्यः=वाच्यार्थः इति नैयायिकाः । लक्षणा शक्यसम्बधस्तात्पर्यानुपपत्तितः । न्याय मु० । शब्दख० कारिका ८२ । शक्यसम्बन्धो लक्षणा-इति रसगङ्गाधरे श्री जगन्नाथाः । किन्तु केचिल्लक्षणां व्यञ्जनां चापि शक्तिमाहुः । तदुक्तम् वाच्योऽर्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः । व्यङ्ग्यो व्यञ्जनया ताः स्युस्तिस्रः शब्दस्य शक्तयः ।। सा. दर्प. । परि २। कारि. ३

मुख्यार्थस्य आत्मनोऽप्युपादानादियमुपादानलक्षणेति व्याचक्षते। अत एव 'मा त्वा वृका अघायवो विदन्०' यजु० ४।३४। इत्यादौ वृकपदेन सर्वेऽपि हिंस्रश्वापदा लक्ष्यन्ते। अस्या लक्षणाया हेतुः क्वचिद् रूढिः। यथा-कर्मणि कुशल इति। क्वचित् किमपि प्रयोजनम्' यथा—गङ्गायां घोष इति। इदं विवृणोति——

रक्षन् क्षतात्करं क्षिप्रं कुशांल्लात्येष पुष्कलान्
इति वाक्यं क्रमात् क्षीणमभवत् कुशलं पदम्।।१६८

अयं कुशान् लातीति प्रशंसापरकं वाक्यं मुहुरुदीरितम् एकसमस्तपदवन्मध्यवर्तिविभक्तिलोपमनुभूय कुशलः इत्यभवत्। किंच——

विहायाऽर्थं कुशग्राहिरूपं स्वं योगजं ततः
विवेचकत्वसाधर्म्याद् दक्षाऽर्थे रूढतां गतम्।।१६९
प्रवीणः स प्रकृष्टो यो वीणावादनकर्मणि।
प्रवीणोऽध्ययनेऽत्रापि पूर्ववद् रूढलक्षणा।।१७०
सादृश्यगुणयोगेन गौणीयं लक्षणोच्यते।
सादृश्येतरसम्बन्धै स्तै स्तैः शुद्धाऽभिधीयते।।१७१

यत्तु दर्पणकारः 'केचित्तु कर्मणिकुशलः' इति रूढावुदाहरन्ति, तदन्ये न मन्यन्ते। कुशग्राहिरूपस्याऽर्थस्य व्युत्पत्तिलभ्यत्वेऽपि दक्षरूपस्यैव मुख्यार्थत्वात् इत्याह तत्र विचार्यते। प्रत्यक्षपरोक्षातिपरोक्षवृत्तीनि त्रिविधानि पदानि। तत्र-प्रत्यक्षवृत्तिषु याचकादिषु व्युत्पत्तिलभ्योऽर्थो झटित्यवभासते न तु परोक्षाऽतिपरोक्षवृत्तिषु। लोकव्यवहारे यत्र प्रचुरप्रयोगाद् यौगिकाऽर्थप्रतिसन्धानं विनैव प्रवृत्तिनिमित्तस्याऽर्थस्याऽवगमस्तत्र तत्पदस्य तदर्थे रूढिरेव शक्तिर्नतु लक्षणा। यत्र तु व्युत्पत्तिलभ्यस्याऽर्थस्य बाधे तत्सम्बन्धी परोऽर्थ उपतिष्ठते तत्रैव लक्षणा। पुरा काले कुशललावण्याऽनुकूलादिपदेषु समुच्चारितेषु तेषां व्युत्पत्तिलभ्याऽर्थानां कुशग्राहिप्रभृतीनां प्रथमोपस्थितिरभूत् बहुजनानां संस्कृतभाषातद्व्याकरणनिपुणत्वात्। अद्यत्वे तु कदाचिदवकाशक्षणेष्वपि प्रयत्नपूर्वकं चिन्तितानामनेकपदानां व्युत्पत्तिलभ्योऽर्थो न धियमधिरोहति। तेन कथं तेषु लक्षणाऽवकाशः? सरित्प्रवाहवद्देशकालभेदेन सततपरिवर्तनशीलानां भाषाणां प्रकृतिरियं यत्——

कदाचित् वाक्यानि पदताम्१ पदानि स्वरूपविकृतिम्२, अर्थश्च परिवर्त्तनं वैविध्यं३ वा

---

१. पुरिशेते इति पुरुषः। अनसः शकटस्य अकं गतिं हन्तीत्यनोकहः। नितरां पुनातीति निपुणः। नितरां स्नातः निष्णातः।

२. दौर्हृदम्==औत ओत् (१-२७) इत्यनेन औकारस्योत्वे, सर्वत्र लबराम् (३.३) इत्यनेन रेफलोपे। ऋतोऽत् (१-२७) इत्यनेन ऋकारस्यअत्वे, प्रदीप्तकदम्बदोहदेषुलः (२-१२) इत्यनेन दकारस्य लत्वे च दौर्हृदम्, दोहदम् दोहल इति रूपत्रयसिद्धिः।

३. उपेत्याधीयतेऽस्मादित्युपाध्यायः। अत्रापि वाक्यं पदत्वं प्राप्तम्। ततः उत ओत् तुण्डरूपेषु (१.२०) इत्यनेनादेः उतः ओत्वम्, पो वः (२.१५)पकारस्य वत्वम्, ध्यह्योर्झः (३.३८) ध्यइत्यस्य झकारादेशः, शेषादेशयोर्द्वित्वमनादौ (३.५०) आदेशझकारस्य द्वित्वम्, वर्गेषु युजः पूर्वः (३.५१) प्रथम झकारस्य जकारादेशः, कगडतदपयवां प्रायो लोपः(२.२)अन्तिमस्य पकारस्य लोपः, ततश्च हिन्दी भाषायां स एव उपाध्यायो ह्रासमवाप्य ओझा=कुलविशेषो मन्त्रचिकित्सकोवा, मिथिलायां च 'झा' ब्राह्मणानां वर्गविशेषार्थकोऽभवत्। उत्तरप्रदेशग्रामेषु स पाधा=ग्राम शिक्षकः श्रूयते। कन्था=जीर्णवस्त्रम् भारते।

प्राप्नुवन्ति, कानिचित् पदानि विभिन्नजातीनां परस्परसंपर्कवशाद् विभिन्नभाषाभ्यः समागत्य तदङ्गतां गच्छन्ति। तेषु व्युत्पत्त्यन्वेषणं वक्रः पन्थाः। तस्माद् यत् कुशलपदं श्रीमम्मटकाले स्वव्युत्पत्तिलभ्येनार्थेन कुशग्राहिरूपेण कथञ्चित् सम्बद्धमासीत् तदेव श्री विश्वनाथसमये तस्मात् सर्वथा विच्छिन्नमभवदिति नात्र चित्रम् । तेनाऽत्र न काव्यप्रकाशकारो दोषभाजनं न वा साहित्यदर्पणप्रणेता । तथापि येभ्यः कर्मणि कुशल इति रूढिमूललक्षणाया उदाहरणं न रोचते तेषां सन्तोषाय कलिङ्गः साहसिकः, वङ्गो भावुकः, इत्याद्युदाहार्यम् । देशविशेषवाचकत्वेन प्रसिद्धं कलिङ्गपदमिह आधाराधेयमात्रसम्बन्धात्तन्निवासिनं जनं लक्षयति । यथा—

वाष्पयानं समागच्छद् गच्छद् वा यात्रिभिर्जनैः
इन्द्रप्रस्थादिभिः शब्दैरुच्यते स्थाननामभिः।।१७२
अभावाद् गमनादीनां क्रियाणां नगरादिषु ।
मुख्यार्थस्य परित्यागादियं लक्षणलक्षणा ।।१७३

स्थाननामानि यानेषु बाधितानीति लक्षणा
हेतुरत्र न सादृश्यं किन्तु तत्स्थानगामिता ।।१७४
परवञ्चनसम्बद्धा धारा दण्डविधौ च नः ।
खनेत्रयुगनिर्दिष्ट (४२०) संख्यया वर्ततेऽङ्किता ।
१७५

तत्सम्बन्धवशाल्लोकभाषायांतत्प्रतीकताम्—
प्राप्तयाऽऽख्यायते धूर्तो मानवः संख्यया तया।।१७६
पारम्परिकसम्बन्धाद् धारायाः संख्यया सह ।
धूर्तार्थबोधने रुढिमूलेयं शुद्धलक्षणा ।। १७७
आह्वानाय तथा दूरात् क्रेतृभिः पण्यविक्रयी ।
भो आम्रेत्यादि तत्पण्यसंज्ञयैवाऽभिधीयते ।।१७८
निरूढा लक्षणा एतत्सदृश्यः प्रत्यहं जनैः ।
व्यवहारे विधीयन्ते लाघवायैव केवलम् ।।१७९
'गौर्वाहीकः' प्रयोगेऽस्मिन् जाड्यमान्द्यादिकं यथा ।
न तथा लक्षणास्वासु किञ्चिदन्यत् प्रयोजनम् १८०

आसु=पूर्वप्रदर्शितलक्षणास्वित्यर्थः । लक्ष्यलक्षकयोः परस्परं सादृश्यसम्बन्धे गौणी तदितरसम्बन्धेषु च शुद्धा लक्षणेत्यग्रे वक्ष्यते । अथ प्रयोजनवतीं लक्षणामाह—

विवक्षिताऽभिधाने तु न क्षमं वीक्ष्य वाचकम् ।
क्रियते लक्षणा तत्र प्रयोजनवती परा ।। १८१
गङ्गायां घोष इत्यत्र प्रवाहार्थस्य मुख्यता ।
तत्र घोषस्य बाधेन लक्ष्यं लक्षणया तटम् ।।१८२
सामीप्यं तत्र सम्बन्धस्तटस्य गङ्गया सह ।
शैत्यपावनतोत्कर्षबोधनं च प्रयोजनम् ।।१८३
शीतत्वपावनत्वादेर्य उत्कर्षः प्रतीयते ।
साक्षाद् गङ्गादिभिः शब्दैर्न स गङ्गातटादिभिः१८४
तटार्थस्य न मर्यादा निर्देष्टुं क्वापि शक्यते ।
क्रोशद्विक्रोशपर्यन्तं प्रसारात् परतोऽपि वा ।।१८५

---

पश्चिमोत्तरप्रदेशे ताशकन्दसमरकन्दादिनगरनामसु तदेव नगरार्थकमभवत् ।'कन्थापलदनगरग्रामह्रदोत्तरपदात् (पाणि० ४-३-१४१। नापितः=क्षौरकर्ता । संस्कृतभाषायामस्य पदस्य व्युत्पत्तिः दुःशका । भाषाविज्ञानविदस्तु अस्योद्भवं स्नापितपदात् स्न इत्यस्य विकर्षेण सनापित इति जाते ततः सकारस्य हकारत्वे तयोः आद्यन्तविपर्ययेण हकारलोपेन च वर्णयन्ति। अद्य हिन्दी भाषायां तदेव 'नाई' इतिश्रूयते । भाषाणामीदृशेचक्रव्यूहे बहुत्र व्युत्पत्तिरेव दुःसाध्या तदाधारा लाक्षणिकत्वचिन्ता तु सुतरां दूरापेतेति सुधियः स्वयं विभावयन्तु । इहोद्धृतानि प्राकृतसूत्राणि प्राकृतप्रकाशस्य सन्ति ।

१. ४२० इति स्वरूपया ।

पूर्वोक्ता रूढि प्रयोजनाऽन्यतरहेतुका सा लक्षणा उपादानलक्षणा लक्षणलक्षणा चेति भेदाभ्यां द्विविधेत्युच्यते--

द्वैविध्यं ते अपि द्वे च गच्छतो लक्षणे पुनः ।
उपादानवती पूर्वा परा लक्षणलक्षणा ।। १८६
मुख्यार्थो बाधितो यत्राक्षिपत्यन्यं स्वसिद्धये ।
स्यादात्मनोऽप्युपादानात्तत्रोपादानलक्षणा ।। १८७

स्वसिद्धये=वाक्यार्थे स्वान्वयस्य सिद्धये यत्र बाधितो मुख्यार्थोऽन्यमाक्षिपन् स्वार्थं सर्वथा न जहाति तत्रात्मनोऽप्युपादानाद् उपादानलक्षणा ।

### १ तत्र रूढिमूला उपादानलक्षणा—

धावति श्वेत इत्यत्र गुणः श्वेतः क्रियाऽक्षमः ।
अश्वादीनाक्षिपत्यन्यान् वाक्यार्थेऽन्वयसिद्धये।।१८८
उपादानाद् गुणस्याऽपि गुणिना सह लक्षणे ।
उपादानवती नाम्ना जहत्स्वार्थाऽप्यसौ मता ।।१८९
गुणे शुक्लादयः पुंसि, गुणिलिङ्गाश्च तद्वति ।
तथापि लाघवादेषु गुणस्यैवाऽभिधेयता । १९०
गुणिनो ग्रहणे तेन कदाचिल्लक्षणोचिता ।
विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे ।।१९१

तस्मात्--

गुणाभिधायिभिः शब्दैः श्वेतश्यामादिभिः क्वचित् ।
बोध्यन्ते गुणिनो यत्र निरूढा तत्र लक्षणा ।।१९२

तदुक्तं रसगंगाधरे, "एवं नीलादिपदानां लाघवाद् गुणगतजातेरेव शक्यताऽवच्छेदकतया गुणद्रव्ययोः नीलो घटः इत्यादौ सामानाधिकरण्येनाऽन्वयस्याऽनुपपत्तेः समवायात्मना गुणरूपशक्यस्य सम्बन्धेन नीलादिशब्दैर्गुणिनो लक्ष्यन्ते । वेदेऽपि—

शुक्रं ते अन्यद् यजतं ते अन्यद्
विषुरूपे अहनी द्यौरिवासि० ।ऋ० ६।५८।१।

देवता=पूषा । ऋषिः=बार्हस्पत्यो भरद्वाजः। छन्दः=त्रिष्टुप् । हे पूषन् स्वरश्मिभिः सर्वेषां परिपोषकृत् सूर्य । ते शुक्रं अन्यद् (अस्ति) त्वदीयं शुक्रं=शुक्लं, रलयोरभेदात् । इह रूपमितिपदं योज्यम् । अन्यद् वर्तते । यजतम्=यजनीयम्=हवनीयम् इन्धनादिकम् । लक्षणया-तत्सदृशं कृष्णमित्यर्थः । तद्रूपं चान्यदस्ति । विषुरूपे=विषमवर्णे। प्रकाशमयत्वाद् दिनं शुक्लम् तमोमयत्वाद् रजनी-श्यामा । इति तयो विषमरूपत्वम् । ते अहनी तव कर्म इति यास्कः । तवोदयेन दिनमस्तमयेन च रजनी भवतीति भावः । त्वं द्यौरिव=द्युलोकइव द्योतनशीलः सर्वमावृत्य वर्तसे । शुक्रमिति पदमिह श्वेतगुणवाचकम् । तच्च वाक्यार्थेऽन्वयसिद्धये इतरपदं रूपमाक्षिपति । रूपे शुक्लगुणस्याऽप्युपादानादिह रूढिमूलोपादानलक्षणा । यद्यप्यनुपदं वक्ष्यमाणयोः सारोपा साध्यवसाना चेति लक्षणा-भेदयोः सारोपाया एव प्रथमं प्रतिपादनमुचितं तथापि श्वेतो धावतीत्यत्र लक्षणाया या विशदता-गुणे क्रियाया असंभवात्, न सा श्वेतोऽश्वो धावतीत्यत्र । एतादृशस्य प्रयोगस्य लोके प्रत्यहं पामरैरपि विधीयमानत्वान्मुख्यार्थबाधः केवलताकिकधीगम्यः । तस्माद् व्युत्क्रम्य प्रथमं साध्यवसानालक्षणोपात्ता । सारोपायास्तु "श्वेतोऽश्वो धावती" त्येवोदाहरणम्।गुणवाचकस्य श्वेतपदस्य गुणिवाचकेनाऽश्वपदेन अभेदाऽन्वयो न संभवति । "द्रव्यं गुणस्तथाकर्म सामान्यं सविशेषकम् । समवायस्तथाऽभावः पदार्थाःसप्त कीर्तिताः ।।" (न्याय. मुक्ता. प्रत्यक्षखण्डे द्वितीया कारिका) इत्युक्तेस्तयोः पृथग्विषयत्वात् । तथापि श्वेतोऽश्व इत्यादौ सामानाऽधिकरण्येनाऽन्वयाऽनुपपत्तौ लक्षणया श्वेतगुणवान् अश्वः इति प्रतीतिरुपजायते ।

### २ अथ प्रयोजनवती उपादानलक्षणा--

भुञ्जते यष्टयः, कुन्ताः प्रविशन्तीति वाक्ययोः ।
भुजि प्रविष्टिकर्तृत्वं जडानां नोपपद्यते ।।१९३
मुख्यार्थबाधे मुख्यार्थयुक्ता यष्ट्यादिधारिणः ।
लक्ष्यन्ते पुरुषास्तस्मादत्रोपादानलक्षणा ।।१९४

यष्टिकुन्तादिभिः शब्दै रूढ्या बोधो न तद्वताम् ।
यष्ट्याद्यत्यन्तबाहुल्यद्योतनं तु प्रयोजनम् ॥१९५

"जडेषु यष्टिकुन्तादिषु भोजनप्रवेशनादिक्रिया कर्तृत्वमनुपपद्यमानं तत्संयुक्तान् पुरुषान् लक्षयति । पुरुषैः सह तेषां संयोगः सम्बन्धः । इह पुरुषैः सह-मुख्यार्थानां यष्टीनां कुन्तानां चाऽप्युपादानाद् इयमुपादानलक्षणा, किञ्च यष्टिकुन्तपदे स्वसंयुक्तान् पुरुषान् लक्षयेताम् इति रूढिर्नास्ति, किन्तु यष्ट्यादिनिष्ठ-बाहुल्यतैक्ष्ण्यादीनां पुरुषेष्वपि द्योतनं प्रयोजनमेव निमित्तम् । अत्रैव एते कुन्ताः प्रविशन्तीति वाक्य-प्रयोगे एतत्सर्वनाम्ना विषयस्यापि निर्देशात् सारोपा, तदप्रयोगे तु साध्यवसाना लक्षणा । यथावा—

सर्वे नन्दन्ति यशसाऽऽगतेन-
सभासाहेन सख्या सखायः ।
स किल्विषस्पृत् पितुषणिर्ह्येषा-
मरंहितोभवति वाजिनाय॥ ऋ. १०।७०।१०।

"देवता=ज्ञानम् । ऋषिः=बृहस्पति राङ्गिरसः। छन्दः=त्रिष्टुप्। सर्वेनन्दन्तीति यशसा=यशस्विना=मूर्तिमतेव यशसेत्याशयः। सभासाहेन=सभांसोढुं क्षमेण। विदुषां महान्तमपि समवाय विलोक्य अप्रतिहत-प्रतिभेन सख्या=सुहृदा। सभागतन=सभां प्राप्तेन। सर्वे सखायः नन्दन्ति=अनेनाऽस्माकं विजयोऽवश्यं भविष्यतीति विश्वासेन प्रसीदन्ति । स च ज्ञाना-तिशयेन स्वसहयोगिनाम् किल्विषस्पृत्=किल्विषं पापम् अज्ञानंवा बाधते निगूहति वा । पितुषणिः= पितुरित्यन्ननाम। पातेर्वा पिबते र्वा प्यायते र्वेति निरु-क्ते(९।३।२४)यास्कः। स विजयलब्धदानदक्षिणा-ऽन्नाऽऽदिविभजनेन स्वसहयोगिनोऽपि परिपुष्णाति। एषाम्=स्वपक्षस्थजनानाम् । अरंहितः=अति-मात्रं हितसाधकः वाजिनाय=सर्वज्ञत्वाय बलाय समुत्कर्षाय वा भवति । वाचामिनः वाजिनः इति श्री सायणः । इह यशःपदं यशस्विनं जनं लक्षयति । पुरुषेण सह यशसोऽप्युपादानाच्चात्रप्रयोजनवत्युपादानलक्षणा । यशसोऽतिशयख्यापनं च प्रयोजनम् । किंच धर्मिवाचकं वाजिनपदं यथा धर्मं ज्ञानं बलं वा लक्षयति तथा हितपदमपि हितसाधकम् ।

३ अथ रूढौ लक्षणलक्षणा—

रूढोऽर्थो बाधितो यत्र स्वमर्थं सर्वथा जहत् ।
स्वद्वारा गमयत्यन्यं तत्र लक्षणलक्षणा ॥१९६

अथवा—

बोधाय लक्षणीयस्य यदि मुख्यार्थवाचकम् ।
अर्पयेत्पदमात्मानं वाक्याऽर्थेऽन्वयसिद्धये ॥१९७
उपलक्षणहेतुत्वादियं लक्षणलक्षणा ।
मुख्याऽर्थाऽमिश्रमुख्याऽर्थभिन्नोक्तिरुपलक्षणम् ।
॥१९८

यथा कलिङ्गः साहसिकः । इह देशविशेष-वाचकस्य कलिङ्गपदस्य चेतनधर्मेण साहसिकत्वेन सम्बन्धाऽभावान्मुख्यार्थबाधे तत्पदमाधाराऽऽधेय-भावसम्बन्धेन कलिङ्गदेशवासिनं जनं लक्षयति । निवासिनि विवक्षितस्य साहसिकत्वधर्मस्य देश-विशेषरूपे भूभागे सर्वथाऽभावाल्लक्षणलक्षणा । इह कलिंगपदं स्वमुख्यमर्थं जहातीति जहत्स्वा-र्थाऽपराऽभिधेयम् । अन्येतु-कलिङ्गदेशवास्तव्यः पुरुषः इत्यर्थबोधाय कलिङ्गपदम् इहाऽऽत्मानं समर्पयति उपस्थापयति, तेन च वाक्ये पदार्थानामन्वयः संगच्छते । इयम् उपलक्षणहेतुका । मुख्यार्थेनाऽमि-श्रितस्य मुख्यार्थभिन्नस्य लक्ष्यार्थस्य प्रतिपादनम् उपलक्षणम् । कुन्ताः प्रविशन्तीत्यत्र तु कुन्तपदं स्व मुख्यार्थयुक्तानेव पुरुषान् लक्षयतीति सोपा-दाना लक्षणा ।

यथावा—

सुरुचिर्गुर्जरः पञ्चनदस्त्वध्यवसायवान् ।
हरियाणा रणेशूरः सिन्धुर्व्यापारपारगः ॥१९९
कूटनीति र्महाराष्ट्रं राजस्थानं पराक्रमः ।
बंगश्च भावुकः स्वात्मोपेक्षाप्रदेश उत्तरः ॥२००

प्रदेशरूढसंज्ञाभिराभिस्तत्र निवासिन: ।
लक्ष्यन्ते पुरुषास्तस्माद् रूढिमूलात्र लक्षणा ॥२०१

अत्र प्रदेशविशेषरूढैस्तै स्तैः शब्दैस्तन्निवासिनो जना लक्ष्यन्ते ।

यथावा–

इदं देवा: शृणुत ये यज्ञियास्थ-
भरद्वाजो मह्यमुक्थानि शंसति ।
पाशे स बद्धो दुरिते नियुज्यतां
यो अस्माकं मन इदं हिनस्ति ॥
इदमिन्द्र शृणुहि सोमप
यत्त्वा हृदा शोचता जोहवीमि ।
वृश्चामि तं कुलिशेनेव वृक्षं
यो अस्माकं मन इदं हिनस्ति ॥

अथर्व का. २। सू. १२। मन्त्र. २,३। देवता=देवा: इन्द्रश्च क्रमेण । छन्द: जगती त्रिष्टुप् ।

इदं देवा इति-ये केचन यज्ञिया:=यजनार्हा:= पूज्या: । यज्ञर्त्विग्भ्यां घखञौ (पाणि. ५.१.७१) इति सूत्रेण यज्ञपदाद् अर्हाऽर्थे घप्रत्यय: । देवा:= देवोचितगुणशालिनः सत्पुरुषा: सन्ति, ते यूयम् मदीयमिदं वाक्यं शृणुत। वाजम्=अन्नं बलम् उत्साहवर्धिनीं वाचं वा भरतीति भरद्वाज: , स मह्यम् उक्थानि शंसति=नः सत्प्रयत्नान् विलोक्य प्रशंसावचनान्युच्चारयति । तद्विपरीतम् य:कश्चित् शत्रुपक्षपाती अस्माकम् इदं मन: हिनस्ति= शत्रुक्षयाय जनकल्याणाय वा दृढनिश्चयमपि नो मनोबलं मिथ्यादूषणोद्घोषणेन क्षिणोति स पाशे वद्धो दुरिते नियुज्यताम्= बन्धनागारे निक्षिप्त: सन् स्वपापफलोपभोगाय बाधितो भवतु। प्राणनाशापेक्षया मनोबलनाशोऽधिकतरगर्हणीयोऽपराध इति भाव: । हे सोमप इन्द्र सौम्यगुणवतां जनानां पालक, केषाञ्चिद् देशद्रोहिणां दुश्चरितानि दृष्ट्वा शोचता हृदा यद् अहं जोहवीमि=निवेदयामि तत् त्वं शृणुहि=आकर्णय । त्वां सहायकमवाप्य अहं तं पापिनं कुलिशेन वृक्षमिव वृश्चामि= छिनद्मि यो‌ऽस्माकमिदं मनो हिनस्ति । मन: पदं संकल्पविकल्पसाधनीभूताऽन्त:करणार्थे रूढम् । हिंसा च जीवितजन्तो: प्राणैर्वियोजनम् तच्च मनसो न संभवति । तेन मन: पदं मनोबलं हिनस्तीति क्रियापदं च तत्क्षयं लक्षयति। किंच दुरितपदं पापार्थे रूढम् । कश्चित् सुशासक: स्वयमेव स्वप्रजाजनं पापे न नियोजयति । तेन दुरितपदमिह दुरितफलं लक्षयति । एवम् मनोदुरितपदाभ्यां स्वमुख्यार्थं परित्यज्य स्वसम्बन्धिनो मनोबलस्य (उत्साहस्य) पापफलस्य च लक्षणादत्र रूढिमूला लक्षणलक्षणा ।

यथावा–

अहश्च कृष्णमहरर्जुनं च
विवर्तेते रजसी वेद्याभि: ।
वैश्वानरो जायमानो न राजा-
ऽवातिरज्ज्योतिषाऽग्निस्तमांसि ।ऋ. ६।९।१।

देवता=वैश्वानरोऽग्नि: । ऋषि:=बार्हस्पत्यो भरद्वाज: । छन्द:=त्रिष्टुप् । अहश्चेत्यादि अह: पदं दिनार्थे रूढम् । 'घस्रोदिनाहनी वा तु क्लीबे दिवसवासरौ, इत्यमर: । अर्जुनपदं धवलार्थवाचकम् । वलक्षोधवलोऽर्जुन: इत्यमर: । अह्न: कृष्णत्वं बाधितम् तेनाऽत्रप्रथममह: पदं समानविभक्तिकत्वाद्रात्रिमाह, द्वितीयं तु अर्जुनमिति विशेषणयोगाद् दिवसम् । अथ मन्त्रार्थ:– कृष्णमह:=रात्रि: । अर्जुनम्=शुक्लम् अहर्दिनम् । ते रजसी=स्वेन श्यामेन शुक्लेन च वर्णेन विश्वस्य रञ्जके अथवा प्राणिनां रञ्जनकारके । वेद्याभि: =सर्वजनविज्ञेयाभि: प्रवृत्तिभि: विवर्तेते=पर्यायेणागच्छत: । रात्रौ प्रकृत: प्राणिनां च भिन्ना: प्रवृत्तय:, दिवसे च भिन्ना: । जायमान:= उदयम् अयमान: । राजेव=सूर्यइव । सूर्योहि समस्तसौरमण्डलस्य राजेव । स च यथा प्रात: स्वज्योतिषा

तमांसि अवतिरत=तमांसि तिरयति तथा रात्र्यागमे वैश्वानरोऽग्निरपि । अथवा राजपदेनात्र चन्द्रो ग्राह्यः। सोऽपि स्वचन्द्रिकया तिमिरमप हरति । राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयोः इत्यमरः । दिनवाचकम् अहः पदं कथं रात्रिपरकम् इतिचेत्—लक्षणया यथा—सोऽयं देवदत्तः इत्यत्र तच्छब्दस्य ( स इत्यस्य ) तत्कालतद्देशविशिष्ट-रूपोऽर्थः । इदं शब्दस्य (अयम् इत्यस्य) एतत्काल-एतद्देशविशिष्टः इति । अनयोर्मिथो विरुद्धार्थकत्वे ऽन्वयाऽसंभवाद् भागत्यागलक्षणया तत्कालतद्देश-एतत्काल – एतद्देशवर्तित्वरूपविरुद्धांशपरित्यागेन अविरुद्धः उभयसामान्यः देवदत्तरूपोऽर्थो लक्ष्यते तथाऽत्रापि द्विरुच्चारितस्य अहः पदस्य रात्रित्वाव-च्छिन्नः कालः दिनत्वावच्छिन्नः कालश्चेति परस्पर-विरुद्धांशपरित्यागेन अविरुद्ध उभयसामान्यः कालरूपोऽर्थो लक्ष्यते । परतश्च श्वेतोऽश्वो धावतीति वाक्ये इव इहापि गुणवाचिनोः कृष्णार्जुनपदयो र्गुणिनि लक्षणया कृष्णवर्णवद् अहः=रात्रिः, अर्जुनवर्णवद् अहः=दिनम् इत्यर्थौ विशेष्य-विशेषणभावसम्बन्धात् प्रतीयते । अत्र दिवस-वाचकस्य अहः पदस्य रात्रिसम्बन्धे स्वार्थपरि-त्यागाल्लक्षणलक्षणा सा च रूढिमूला ।

अध्यात्मपक्षे तु-न हन्यते भोगं बिना न क्षयमे-तीति अहः=कर्म । तच्च शुक्लम् अशुक्लं चेति द्विविधम् । उभे कर्मणी मानवं यावज्जीवं रञ्जयतः । वैश्वानरोऽग्निः=विश्वेषु नरेषु नि-लीय स्थितः । अग्निस्तु स्वज्योतिषा=दिव्यात्म-प्रकाशेन सर्वं तमो नाशयति साधकं च सततमग्रे नयतीति तस्याऽग्नित्वम् ।

### ४ अथ प्रयोजननिमित्ता लक्षणलक्षणा—

गङ्गायां घोष इत्यादि वाक्ये गङ्गादिकं पदम्
प्रवाहादिकमर्थं स्वं यस्मान्मुञ्चति सर्वथा ।।२०२
तटेघोषाऽभिधानेन सम्यग्बोधो न जायते ।
शीतत्वपावनत्वादेर्यस्य गङ्गापदेन तु ।।२०३
घोषनिष्ठस्य तस्यापि द्योतनं च प्रयोजनम् ।
प्रयोजनवती तस्मादियं लक्षणलक्षणा ।।२०४

यथा—

द्यावा चिदस्मै पृथिवी नमेते-
शुष्माच्चिदस्य पर्वता भयन्ते ।
य सोमपा निचितो वज्रबाहु,
र्यो वज्रहस्तःस जनास इन्द्रः।। ऋ०२।१२।१३

देवता=इन्द्रः । ऋषिः=गृत्समदः । छन्दः= त्रिष्टुप् ।

द्यावा चिदिति । अस्मै द्यावापृथिवी नमेते=द्यावा-पृथिव्यौ भक्तिभावेन नमस्कुरुतः । अस्य शुष्मात्=बलात् । पर्वता भयन्ते—गिरयो बिभ्यति । शुष्ममिति बलनाम । शोषयतीति सतः । ( निरु० २।७।२४ ) जडयोर्द्यावापृथिव्योर्नमनम्=आदर-दानार्थं कमपि प्रति शिरोनमनादिकम् अनुप-पद्यमानम् तत्रत्यानां चेतनप्राणिनां नमनं लक्षयति । तथैव, चेतनेष्वेव उपलभ्यमाना भयानुकूला क्रिया पर्वतगतत्वेन वर्णिता तत्रत्यजन्तुषु तां प्रकटयति । यः सोमपाः=सौम्यगुणवतां पालयिता । निचितः =सर्वत्र व्याप्तः । वज्रबाहुः वज्रसदृशौ सुदृढौ बाहू यस्य सः अशरीरिणः परमात्मनोबाह्वो-रभावाद् इह बाहु पदं सृष्टिनिर्माणादिषु तस्य सामर्थ्यं लक्षयति । तदुक्तम् श्वेताश्वतरोप-निषदि-अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । ( अध्या० ३। श्लोक १९ ) । यो वज्रहस्तः=दुष्टदमनशक्तिर्हस्ते यस्य । जनासः=हे जनाः एतादृशो यः कश्चित् स एवेन्द्रः । द्यावापृथिव्योः पर्वतानां च नमनक्रियायाः भयस्य च सम्बन्धाऽभावेऽपि सम्बन्धवर्णनादतिश-योक्तिरलङ्कारः ।

पूर्वोक्तायाश्चतुर्विधलक्षणायाः सारोपा सा-ध्यवसाना चेति भेदद्वयं निरूपयति—

आरोपाध्यवसानाभ्यां हेतुभ्यां सा पुनर्द्विधा ।
तयोः पूर्वा तु सारोपा, परा साध्यवसानिका ॥२०५
सारोपाऽऽरोप्यते प्रोक्ते विषये विषयी यदा ।
निगीर्णे तु तदारोपात् सैव साध्यवसानिका ॥२०६

पूर्वोक्ता चतुर्भेदा लक्षणा प्रथमं रूढ़िमूला प्रयोजनमूला चेति द्विविधा सती उपादानलक्षणा लक्षणलक्षणाऽऽख्याभ्यां भेदाभ्यां विभक्ता चतुर्वितां भजते । चत्वारोऽपि च ते भेदाः पुनः सारोपेण साध्यवसानेन चेति भेदद्वयेन प्रगुणिता अष्टविधत्वं भजन्ते। प्रोक्ते=विषयिणाऽनिगीर्णे अत एव साक्षादुक्ते विषये सामानाधिकरण्येन तादात्म्यारोपात्ते सारोपालक्षणा यथा-मुखं चन्द्रः । अत्रशब्दोपात्ते मुखे चन्द्रत्वारोपः । सर्वथा भिन्नयोर्मुखचन्द्रयोस्तादात्म्यं न संभवतीति मुख्याऽर्थबाधाच्चन्द्रसदृशं मुखमिति लक्ष्यते । अत्रविषयविषयिणोर्मुखचन्द्रयोः सादृश्यसम्बन्धः । सादृश्यसम्बन्धवतीयं सारोपालक्षणा रूपकालङ्कारस्य बीजम् । विषयिणा निगीर्णे तु विषये साध्यवसानालक्षणा, सा अतिशयोक्त्यलङ्कारस्य बीजम् । 'विषयिणा विषयस्य तिरोधानम् अध्यवसानम्' इति प्रदीपकाराः । यथा 'प्रासादशिखरेष्वत्र चन्द्रराजी विराजते ।' अत्र स्त्रीणां मुखराजीरूपं विषयं निगीर्य तस्य चन्द्रराज्या तादात्म्यं कृतम् यथावा--

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति ॥ ऋ. १।१६४।२० ।

देवता = विश्वेदेवाः ऋषिः = दीर्घतमा औचथ्यः । छन्दः=त्रिष्टुप् ।

अत्र जीव-परमात्म-प्रकृतयो विषयाः पिप्पलभुक् पिप्पलाऽभुक् पक्षियुगल वृक्षैर्विषयिभिर्निगीर्णाः । तेन साध्यवसानेयं लक्षणा । विषयविषयिणोः सादृश्यसम्बन्धाऽभावे तु सारोपा साध्यवसाना वा लक्षणा न रूपकस्य अतिशयोक्तेर्वाबीजम् । 'लक्ष्मी विलासा विदुषां कटाक्षा वेङ्कटप्रभोः ।' अत्र 'हेतुहेतुमतोरैक्यं हेतुं केचित् प्रचक्षते' इत्युक्तस्वरूपो हेत्वलङ्कारः । (कुवलयानन्दे कारि. १६८) हेतुभूता अपि वेङ्कटप्रभोः कृपाकटाक्षास्तत्कार्यैं विद्वद्वृन्दविलासैरेकीकृत्य वर्णिताः । तेषां कार्यकारणभावः सम्बन्धः ।

अथ सारोपलक्षणायाश्चतुर्षुभेदेषु रूढिमूला उपादानवती सारोपा लक्षणा--

श्वेतोऽश्वो धावतीत्यत्र लक्षणा रूढिमूलिका ।
सोपादाना च सारोपा, गुणेन गुणिलक्षणात्॥२०७
अनिगीर्णस्वरूपोऽश्वो निजश्वेतगुणाऽन्वितः ।
समवेतस्वकश्वेतगुणाऽभेदेन लक्ष्यते ॥ २०८

समवेतः=समवायसम्बन्धेन स्थितो यः स्वकः श्वेतगुणस्तेन सहाऽभेदेनाऽश्वो लक्ष्यते । श्वेतो धावतीत्यत्र अश्वरूपस्यार्थस्य स्ववाचकपदेन अनुपादानात् तं श्वेतगुणविशिष्ट इति रूपो लक्ष्याऽर्थो निगिरति । किन्तु श्वेतोऽश्वो धावतीत्यत्र मुख्यार्थस्य अश्वस्य स्ववाचकेन अश्वपदेनैव उक्तत्वात् तं श्वेतगुणविशिष्ट इति स्वरूपो लक्ष्यार्थो न निगिरति । यथावा--

गिरयस्ते पर्वता हिमवन्तोऽरण्यं ते पृथिवि स्योनमस्तु ।
बभ्रुं कृषणां रोहिणीं विश्वरूपां ध्रुवां भूमिं पृथिवीमिन्द्रगुप्ताम् । अजीतोऽहतोऽअक्षतोऽध्यष्ठां पृथिवीमहम् ॥ अथर्व. १२।१.११॥

देवता=भूमिः । ऋषिः=अथर्वा । छन्दः=त्र्यवसाना षट्पदा विराडष्टिः । गिरयस्ते इति–हे मातृभूमे ते हिमवन्तः पर्वताः, गिरयः=हिमरहिताः पर्वताः सामान्या इत्यर्थः । तव अरण्यम् =वनोपवनादिकं सर्वं नः स्योनं=सुखदम् अस्तु । स्योनम् इति पदस्य लिङ्गवचनविपर्ययपूर्वकं सर्वैः

(क्रमशः)

# षष्टितन्त्रम्

## [साम्प्रतमुपलब्धं षडध्यायात्मकं सांख्यदर्शनम्]

श्री उदयवीर शास्त्री

२-अपरं सूत्रम्--

सात्त्विकमेकादशकं प्रवर्त्तते वैकृतादहङ्कारात्।

कारिकायां प्रथमचरणपाठः 'सात्त्विक एकादशकः' इति लिङ्गविपर्यासेन निर्दिष्टः। गतसूत्रे (२।१७) 'कार्यम्' इति विधेयपदम्। तदनुरोधेन परसूत्रे (२।१८) 'सात्त्विकमेकादशकं' इति नपुंसकनिर्देशः। कारिकायां 'कार्य' पदस्थाने 'सर्गः' इति पुंपदप्रयोगः। तदनुरोधेन कारिकायां 'सात्त्विक एकादशकः' इति पुल्लिंगपाठः।

सूत्रकारो यदि कारिकानुकरणं कुर्यात्, तदा तादृशमेव कारिकानुसारिणं पुल्लिङ्गपाठं सूत्रे निर्दिशेत्। सूत्रानुकारित्वे कारिकाकृत्पक्षे तु नेयं कल्पना संभाव्यते। यतो हि सूत्रपठितं 'कार्यम्' इति साधारणं पदम्; सार्वकालिके कार्यमात्रे प्रयुज्यते। सर्गपदस्य तु जगदारम्भकालिककार्य एव विशेषतः प्रयोगः। स्यान्नाम, प्रौढितयाऽन्यत्रापि काले तस्य प्रयोगः, परं प्रयोगस्य स्वारस्यं वैशिष्ट्यञ्च तस्मिन्नेवार्थ उपयुज्यते। एवमर्थगौरवधिया पदसौष्ठवधिया वा कारिकाकृत् सूत्रगतं कार्यपदमपहाय तत्स्थाने 'सर्ग'-पदं प्रायुङ्क्त। तस्मात् सूत्रे कारिकानुकारिता न संभाव्यते। तथापि सूत्रस्य कारिकारूपत्वं त्ववतिष्ठत एव। अत्र विषयेऽनुपदमेकः कश्चिद्विचारः प्रस्तोष्यते।

३-तृतीयं सूत्रं कारिकारूपं वर्त्तते--

सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च, इति।

अस्य सूत्रस्य प्रथमपदपाठः प्राक्काले 'सामान्या करणवृत्तिः' इत्यसमस्त एवासीत्। अत्र पाठे ब्रह्मसूत्रशांकरभाष्यं प्रमाणम्। 'न वायुक्रिये पृथगुपदेशात्' (२।४।९) इति सूत्रव्याख्यानावसरे आचार्यो निर्दिशति--"एवं हि तन्त्रान्तरीया आचक्षते--'सामान्या करणवृत्तिः प्राणाद्या वायवः पञ्च, इति।'' तन्त्रान्तरं ह्यत्र सांख्यम्। 'आचक्षते' इति क्रियापदप्रयोगात् तत्र शास्त्रे कथितं लिपिबद्धं कमपि सन्दर्भमाचार्योऽत्र समुद्धरति, इति स्पष्टं प्रतिभाति। सन्दर्भान्ते 'इति' पदप्रयोगोऽप्येतमर्थं द्रढयति। अयं पाठः कारिकारूपो न कथमपि संभवति। तेन निश्चितं भवति-शंकरकाले सूत्रस्यायमेव पाठ आसीत्। असमस्तं सूत्रस्य पदद्वयमाद्यं समासीकृत्य सूत्रं कारिकाकृता कारिकारूपतां नीतम्। पठनपाठनप्रणाल्यां कारिकाग्रन्थप्राधान्येन तदधीतीनां कारिकापाठ एवाभ्यस्त आसीत्। कालान्तरेण सूत्राध्ययनावसरे संस्कारवशात्, स एव पाठः सूत्रस्य कृतोऽध्येतृवर्गेण। प्रामाणिकेषु शांकरभाष्यसंस्करणेषु सर्वेष्वपि समुद्धृतस्य सन्दर्भस्य पाठः समासरहित एवोपलभ्यते। भाषासंस्करणेष्वधुना अच्युतग्रन्थमालादिना प्रकाशितेषु कारिकाभ्यासवशादेव प्रमादाभिभूतैः संशोधकैः प्राक्तनभाष्यपाठो विपर्यासं नीतः। न ते पाठस्यास्यैतिहासिकं महत्त्वं ज्ञातुमशक्नुवन्।

एवमाद्येऽध्यायत्रये केवलमेकं सूत्रं कारिकारूपमुपलभ्यते -- सात्त्विकमेकादशकमित्यादि। सूत्ररचनायामपि कदाचित् आकस्मिकतया तथा छन्दोरूपा रचना जायते। पाणिनिसूत्रेष्वपि कानिचित् सूत्राणि च्छन्दोरूपाणि दृश्यन्ते। तद्यथा-क--पक्षिमत्स्यमृगान् हन्ति, परिपन्थञ्च तिष्ठति। (४।४।३५-३६)

अयमनुष्टुप्छन्दसोऽर्द्धभागः।

ख—अन्तश्च तवै युगपत् क्षयो निवासे जयः करणम् ।
(६।१।२००-२०२)

अयमार्याच्छन्दसो द्वितीयार्द्धभागः ।

ग—पृषोदरादीनि यथोपदिष्टम् (६।३।१०९)

अयमिन्द्रवज्राच्छन्दस एकः पादः ।

एतावता नेदं पाणिनिशास्त्रं यत्किञ्चित्काव्य-ग्रन्थोपजीव्यं कल्पयितुं शक्यम् । एवं सांख्यसूत्रेष्वपि क्वचित् कारिकात्मकं रचनं सम्भवत्येव ।

यद्येवमपि सूत्राणां कारिकानुकारित्वमुद्घो-ष्येत, तदैतद् आद्येषु त्रिष्वध्यायेष्वेव संपद्येत, तत्रैव प्रतिपादितस्य विषयस्य कारिकासु परिसमाप्तत्वात्। यदि अन्त्ये अध्यायत्रये ऽपि क्वचित् सूत्राणां च्छन्दो-मयत्वमुपलभ्येत, तेषां सांख्यसप्ततिमूलत्वमुत्प्रेक्षि-तुमपि न शक्यम् तेषामपि किमन्यत् कारिकामूलत्वमन्वेष्यं स्यात् ? न त्वद्यावधि काचिदेवम्भूता रचना दृष्टा श्रुता वा, यामुपजीव्य सांख्यषडध्याय्या अन्त्याध्यायत्रयस्य रचना वक्तुं शक्येत । अन्त्याध्यायत्रयेऽपि कानिचित् सूत्राणि च्छन्दोरूपाणि दृश्यन्ते । तद्यथा—

क—तद्विस्मरणेऽपि भेकीवत् (४।१६) ।

आर्याच्छन्दसश्चतुर्थचरणमिदम् ।

ख—सक्रियत्वाद् गतिश्रुतेः (५।७०) । अनुष्टुप्-च्छन्दस एकं चरणं द्वितीयं तुरीयं वा ।

ग—निजधर्माभिव्यक्तेर्वा वैशिष्ट्यात्तदुपलब्धेः (५।९५) आर्याच्छन्दसोऽयं द्वितीयोऽर्द्धभागः

घ—ध्यानं निर्विषयं मनः (६।२५) अनुष्टुपच्छ-न्दस इदमेकं चरणम् ।

ङ—पुरुषबहुत्वं व्यवस्थातः (६।४५)

आर्याच्छन्दस इदं चतुर्थं चरणम् ।

एवं सांख्यसप्तत्या अन्तिमार्यायां संकोतितं षष्टितन्त्रस्वरूपं साम्प्रतमुपलभ्यमाने षडध्यायात्मके सांख्यदर्शन एव संघटते,तस्मादीश्वरकृष्णधिया तस्यैव षष्टितन्त्रत्वमुपपादितं भवति ।

## सप्ततिसंख्याविषयं विवेचनम्

सर्वमेतदुपपादितमसहमानाः केचनाधुनिकाः कथयन्ति – आर्येयं सर्वान्तिमा संख्यया साम्प्रतं द्विसप्ततितमा । ईश्वरकृष्णरचनायामर्थप्रतिपादि-कानामार्याणां सप्ततिरेवासीत् । अतस्तदतिरिक्ताः प्रक्षिप्ता एवार्याः । सेयमन्तिमार्या प्रक्षिप्तत्वात् सप्तत्याः षष्टितन्त्रोपजीव्यत्वे न प्रमाणम् ।

साम्प्रतं शास्त्रीयार्थप्रतिपादिकानामार्याणा-मेकोनसप्ततिरेव समुपलभ्यन्ते । सप्ततिसंख्यापूर-णाय तिलकमहोदयेनान्विष्टा खल्वेका आर्या । तद्विषये किञ्चिद् विवेचनमपेक्ष्यते ।

## तिलकोपज्ञा आर्या

अभिहितमेतत् प्राक् – आर्यासप्तत्यामीश्वर-कृष्णरचितायामधुना द्विसप्ततिरार्या वर्तन्ते । परं तत्र गौडपादीयं भाष्यमेकोनसप्ततिमितास्वेवार्यासु समाप्यते । अतोऽनुमीयते – शास्त्रीयार्थप्रतिपादि-काः सप्ततिरेवार्याः ग्रन्थेऽस्मिन्नासन् । तत्रैका आर्या कथञ्चिल्लुप्ता । तिस्रश्चावशिष्टाः साम्प्रतं समुपलभ्यमानाः कारिकाः केनचिदत्र, परं गौड-पादभाष्यनिर्माणकालात् प्रक्षिप्ता इति सगौडपाद-भाष्यायाः सांख्यकारिकायाः सम्पादनावसरे वि-लसनः प्रत्यपादयत् ।

अनन्तरं विलसनलेखानुरोधेन लुप्तामार्यामन्वे-षमाणः तिलकोपाव्हो बालगङ्गाधरः सांख्यसप्तत्या एकषष्टितमकारिकाया अधस्तात् समुपलभ्यमानं गौडपादीयं भाष्यं कारिकाद्वयस्य वर्त्तते' इति नि-र्धार्य ततः प्रतीकभूतान् पदसमूहान् विचित्याऽनु-विचित्य निम्नांकितामार्यामयोजयत्—

कारणमीश्वरमेके ब्रुवते कालं परे स्वभावं वा ।
प्रजाः कथं निर्गुणतो व्यक्तः कालः स्वभावश्च।।

इयमार्या ईश्वरास्तित्वं निराकरोतीति कृत्वा कश्चिदीश्वरपक्षपाती ग्रन्थादस्मादिमां व्यलोपयत् । परमस्माकं भाग्यवशाद् भाष्यं गौडपादीयमवशिष्टम् । कारिकाकृद् ईश्वरकृष्णश्चासीन्नितरां निरीश्वरवादीति प्रस्तुतकारिकातः स्फुटमेवेति लोकमान्यस्तिलकः स्वमतं प्राकाशयत् । विल्सनमतानुसारं सोऽपि– सांख्यीयार्थप्रतिपादिका एकोनसप्ततिरेवार्या – इति मन्यते, शिष्टास्तिस्रश्चार्या विषयोपसंहारात्मिका एव । परं न तास्तिस्रोऽपि प्रक्षिप्ता इति तिलकमते विशेषः ।

वयन्तु– 'एकोनसप्ततिसंख्यापरिमितास्वेवार्यासु सांख्यीयमूलविषयप्रतिपादकत्वम्' इति मतस्वीकारे एव विल्सनतिलकप्रभृतयो भ्रान्ताः–इति मन्यामहे । सांख्यीयार्थतत्त्वं तु वस्तुतोऽष्टषष्टिमितास्वेवार्यासु परिसमाप्यते । अवशिष्टाश्चतस्रआर्याः प्रस्तुतग्रन्थस्योपसंहारभूता एव । सांख्यकारिकायामेव द्विसप्ततिरार्याः साम्प्रतं समुपलभ्यन्ते ।

द्विसप्तत्यार्यात्मके ग्रन्थे सप्ततिव्यवहारस्तु समीपगतपूर्णसंख्यानुरोधादेव बोध्यः । भारतीयवाङ्मयपरम्परायां ग्रन्थनामनिर्देशे व्यवहारोऽयमाधारभूतोऽवलोक्यते । तद्यथा––

१–अभिनवगुप्ताचार्यप्रणीते 'परमार्थसार' नाम्नि ग्रन्थे पञ्चाधिकशतमार्याणां वर्त्तते । परं ग्रन्थकारः स्वयमन्त्यायामार्यायां ग्रन्थस्य 'आर्याशतकम्' इति नाम निर्दिशति । एवं तत्रान्त्या आर्या-

आर्याशतेन तदिदं संक्षिप्तसारमतिगूढम् ।
अभिनवगुप्तेन मया.....।।१०५।। इति ।

२–क्षेमेन्द्राचार्यविरचिते 'पुरुषार्थशतके' पञ्चाधिकशतश्लोकाः सन्ति । तत्र मुख्यविषयपराणां श्लोकानां संख्या–द्व्यधिकशतम् । श्लोकद्वयं मंगलाचरणरूपम् एकश्चोपसंहारात्मकः । तथापि शतक–नाम्नैव ग्रन्थव्यवहारः ।

३–गोवर्धनाचार्यप्रणीते 'आर्यासप्तशती' नाम्नि ग्रन्थे षट्पञ्चाशदुत्तरसप्तशतानि (७५६) श्लोकाः। तत्र ग्रन्थारम्भे भूमिकारूपेणोपनिबद्धाश्चतुः पञ्चाशत् श्लोकाः । षट्श्लोकाश्चोपसंहारभूताः । मुख्यविषये च षण्णवत्युत्तरषट्शतान्येव (६९६) श्लोकाः सन्ति । तथापि 'आर्यासप्तशती' नाम्नैव ग्रन्थव्यवहारे नास्वारस्यं नानौचित्यं केनाप्युद्भाव्यते ।

४–किञ्च सातवाहनोपाह्वेन हालनृपेण प्रणीतायां गाथासप्तशत्यामपि त्र्यधिकसप्तशतानि (७०३) श्लोकाः । यत्र षट् श्लोका उपक्रमोपसंहारात्मकाः, अवशिष्टाः सप्तनवत्युत्तरषट्शतानि (६९७) श्लोकाः केवलं मुख्यविषयपराः । तथापि 'सप्तशती' इत्येव ग्रन्थस्य नाम सर्वत्रापि व्यवह्रियते ।

एवं 'सांख्यसप्ततिः' इत्यपि नाम–सत्यामप्यार्याणां द्विसप्ततिसंख्यायां – सर्वथाप्युचितमेव । अत्रापि मुख्यविषयेऽष्टषष्टिरेवार्याः, अवशिष्टाश्चतस्रश्चार्या उपसंहारभूताः । एवं गौडपादभाष्यमाश्रित्य मूलग्रन्थस्यैकोनसप्ततिरेवार्याः साम्प्रतं समुपलभ्यन्ते, तत्रैव च गौडपादभाष्यम्, तत एका आर्या कथञ्चिल्लुप्ता, सा चोक्तभाष्यानुसारमेव तिलकेनोद्धृता – इत्यादि कथनं सर्वं निरर्थकमेव ।

शास्त्रदृष्ट्यापि विचार्यमाणा तिलककल्पनाविनिःसृतेयमार्या न कथञ्चिन्मूलग्रन्थभागतां भजते । तद्यथा––

(क) – अस्यां हि कारिकायां – ईश्वर-काल-स्वभावानां जगन्मूलकारणता निषिध्यते । यद्गौडपादभाष्यमाश्रित्य कारिकेयं कल्प्यते, तत्रेश्वरादीनां कारणतानिषेधपरम्परायां पुरुषस्यापि निर्देशो वर्त्तते । परं तिलकः स्वकल्पितकारिकायां 'पुरुषं' नाग्रथत् । ईश्वरकृष्णस्य निरीश्वरवादित्वं विशदीकर्तुमनास्तत्रेश्वरपदमेवाग्रथत् । गौडपादभाष्ये वर्ण्यमानमपि पुरुषपदमुपेक्षितवान् ।

(ख) – अत्र 'पुरुष' पदविन्यासोपेक्षा तिलकस्यानुचितैव । विन्यासे त्वीश्वरकृष्णस्यानीश्वरवादित्वमिवापुरुषवादित्वमप्यापद्येत इत्युभयतः पाशा रज्जुः । वस्तुतस्तु यद्गौडपादभाष्यमाश्रित्येयमार्या कल्प्यते, तत्र भाष्ये सत्वरजस्तमोमयस्य प्रधानस्य जगन्मूलकारणतां जगदुपादानकारणतां वा स्थूणानिखननन्यायेन द्रढयितुमीश्वरादीनां जगदुपादानकारणत्वं निषिध्यते – यथा नेश्वरो जगदुपादानकारणं तथा पुरुषोऽपि । नैतावता कस्याप्यनीश्वरवादित्वमनात्मवादित्वं वा शक्यत आपादयितुम् । तथा सत्याधुनिकशांकरवेदान्तमतवादिनमपहाय सर्वेऽप्यन्ये दार्शनिका निरीश्वरवादिनः स्युः ।

किञ्च न केवलं गौडपादभाष्ये, अपि तु ततोऽति प्रचीनायां माठरवृत्तौ, परमार्थकृते चीनानुवादे चापीयमेकषष्टितमार्या तथैव व्याख्याता । एवञ्च तत्सर्वमेकषष्टितमार्याया उपरिष्टान्मुद्रितं सम्प्रत्युपलभ्यमानं गौडपादभाष्यं, व्याख्याश्चान्या माठरवृत्त्याद्या अप्येकस्या एवार्यायाः, नार्याद्वयस्य । आर्याद्वयस्यैवेदं व्याख्यानमिति भ्रान्तिरेव तिलकं दूरमपजहार ।

(ग) – एकषष्टितमकारिकायां प्रकृतेर्जगन्मूलकारणतादृढीकरणप्रयोजनञ्च तस्याः सुकुमारतरताप्रतिपादनम् । तदेव विस्तरशोयाख्यातृभिर्वर्ण्यते । ईश्वरादीनां जगदुपादानकाणत्वे तु प्रकृतेः सुकुमारतरत्वं दूरापेतं स्यात् । प्रकृतेः सुकुमारतरता पुनः– पुरुषेणोपलक्षिता स्वैरिणीव, प्रकृतिपुरुषविवेकज्ञाने सति, तत्पुरुषसङ्गान्निवर्त्तते प्रकृतिरियम् – इत्येवंरूपा; सा चेश्वरादीनां जगदुपादानकारणत्वे न घटते । तस्मात्तदुपपादनायैव व्याख्यातृभिरनेकैः प्रसंगवशादीश्वरादीनां जगदुपादानकारणत्वं प्रतिषिध्य प्रकृतेः सुकुमारतरत्वं प्रतिष्ठापितम् । एवञ्च सर्वाण्यपीश्वरादीनां जगदुपादानकारणत्वप्रतिषेधपराणि व्याख्यानानि कारिकास्थ–'सुकुमारतर' पदविवरणभूतान्येव । तस्मादेतद्व्याख्यानमालम्ब्य कारिकान्तरकल्पनं मूलार्थानभिज्ञतामेव विशदीकरोति । तथा च कारिकाविलोपनकारणम् – ईश्वरास्तित्वनिराकरणम् – अपि तिलकाभिमतं न संगच्छते । यतस्तत्र प्रस्तुतेषु व्याख्यानेषु सर्वैरपि व्याख्यातृभिरीश्वरस्य जगदुपादानकारणत्वमेव प्रतिषिध्यते, न तदस्तित्वम् । तस्मात् कथं नामेयमार्या मूलग्रन्थभागतां भजताम् ?

(घ) – अथ तिलककल्पिताया आर्यायाश्छन्दोरचनापि शिथिला वर्त्तते । तथाहि छन्दः शास्त्रानुसारमार्याया विषमगणेषु जगणस्य प्रयोगः सर्वथानिषिद्धः । तथा चोक्तं वृत्तरत्नाकरे–'लक्ष्मैतत् सप्तगणा गोपेता भवति नेह विषमे जः' एवं विषमेषु प्रथमतृतीयपञ्चमादिगणेषु जगणप्रयोगः प्रतिषिध्यत आर्याच्छन्दसि । परमत्र तिलकोपज्ञायामार्यायां तृतीयचरणस्य प्रथमे गणे विषमे जगणप्रयोगो वर्त्तते । आर्यावृत्ते चतुर्मात्रात्मको 'गण' इष्यते । तथा च तृतीयचरणस्य प्रथमो गणः 'प्रजाः क' इत्यात्मकः मध्यगुरुर्जगणो भवतीति नियमादयं जगणप्रयोगः । द्विसप्ततिमितास्वार्यासु क्वाप्यन्यत्रैवम्भूतश्छन्दः––शास्त्रप्रतिकूलः प्रयोगो न दृश्यते । तस्मान्नेयमार्या कथमपीश्वरकृष्णस्य रचना संभवति ।

एवञ्चोपसंहारभूतानामार्याणां गौडपादीयं भाष्यमनुपलभमानेन, तिसृणां चार्याणां मिथोऽर्थसामर्थ्यमविचार्यैव तासां प्रक्षिप्ततांञ्चोद्घोषयता, विलसनेनोद्भावितामार्यासंख्यामूलां भ्रान्तिमाश्रित्य तिलक एकषष्टितमार्याया गौडपादीयं भाष्यमार्याद्वयस्य मन्यमानस्तत एतामार्यामयोजयत् । तस्मात् तिलकोपज्ञैवेयमार्या नेश्वरकृष्णग्रथिता न केनचिल्लोपिता इति निश्चिनुमः ।

एवं प्रस्तुतविवेचनानुरोधेन द्विसप्ततिसंख्या-परिमितास्वेवार्यासु ग्रन्थस्य समाप्तिः, ग्रन्त्यार्यायां षष्टितन्त्रस्वरूपनिर्देशः; तदनुसारि षष्टितन्त्रं समुपलभ्यमानं षडध्यायात्मकं सांख्यदर्शनमेव; तत्रोपलब्धानां कतिचित्सूत्राणां वृत्तरूपतानिराकरणम्, पूर्णसंख्यामूलञ्च ग्रन्थस्य 'सप्ततिः' इति 'सांख्यसप्ततिः' इति वा नामकरणम् – इत्यादयो विषयाः सप्रमाणमुपपादिता बोद्धव्याः ।

न स्यान्नाम सूत्राणां कारिकानुकारित्वम्, परं प्राक्तने वाङ्मये सूत्राणामेषामनुद्धारः प्रबलो बाधको हेतुरेषां प्राचीनत्वे । एषा स्थितिः सूत्राणां कपिलप्रणीतत्वे सुतरां सन्देहोत्पादिका । तदिदानीं सूत्राणां ग्रन्थान्तरेषूद्धरणप्रदर्शनाय प्रकरणान्तरमारभ्यते ।

—○—

# तद्ब्रह्म सर्वैर्मनुजैरुपास्यम्

कवयिता– ग्राचार्य धर्मदेवो विद्यामार्तण्डः

१– ध्वान्तस्य सर्वस्य हि यत्र चान्तः
स्वान्तं प्रशान्तं भवतीह दान्तम् ।
वेदन्तशास्त्राभिहितं तदेव
तत्त्वं परं सर्वैर्जनैरुपास्यम् ॥

२– यत् सत् समस्ते भुवने ततं तत्
यत् पूर्णचिद् रूपमिहास्त्यनन्तम् ।
ग्रानन्दरूपं परमं विशुद्धं
तद् ब्रह्म सर्वैर्मनुजैरुपास्यम् ॥

३– ग्रजं निराकारमनादिपूर्णं
यन्निर्विकारं सदपापविद्धम् ।
कविर्मनीषी परिभूः स्वयम्भूः
तद् ब्रह्म सर्वैर्मनुजैरुपास्यम् ॥

४– दयालु यद् ब्रह्म सदैकरूपं
सर्वस्य लोकस्य विधातृ शास्तृ
यत् सर्वशक्तेः परमं निधानं
तद् ब्रह्म सर्वैर्मनुजैरुपास्यम् ॥

५– न यद् विनानन्दसुशान्त्यवाप्तिः
ध्यायन्ति यद् योगिन ग्राप्तकामाः ।
यज्ज्ञानदातृ प्रथमं प्रकाशं
तद् :ब्रह्म सर्वैर्मनुजैरुपास्यम् ॥

६– ग्रणोरणीयो महतो महद्यत्
प्रोतं यदोतं सकलासु विक्षु ।
ग्रन्तर्निगूढं ह्यजरामरं यत्
तद् ब्रह्म सर्वैर्मनुजैरुपास्यम् ॥

# साहित्य समीक्षा

## वेदोपनिषत्

लेखक:--श्री वेदमुनि परिव्राजक:
प्रकाशक:-वैदिक संस्थान, नजीबाबाद
जि० बिजनौर उ. प्र । मूल्यम् ५)

वेदोपनिषत् पुस्तकस्येयं द्वितीयावृत्ति: । परिवर्धितञ्च संस्करणमस्य पुस्तकस्य सर्वजनप्रियत्वमुपकारकत्वञ्च प्रद्योतयति । स्वामिमहाभागा वेदशास्त्राणां विद्वांसो व्याख्यानवाचस्पतयश्च सन्ति स्वविचारा: सर्वजनबोधगम्या: कथं भवितुमर्हन्तीति सम्यक् विजानन्ति । वस्तुत औपनिषदर्षिभि: स्वकीया योगजन्यानुभूतयो वेदमन्त्रै: परिपोष्योपनिषत्सु संस्थापिता:सन्ति । अस्मन्मते त्वद्यापि तादृश एव प्रयत्नो विधातव्य: न जाने कदा सा स्थिति:—प्रादुर्भविष्यतीति । श्री स्वामिवेदमुनिपरिव्राजकै र्वेदेभ्योऽध्यात्मसम्बन्धिमन्त्रानवचित्य वेदोपनिषत् पाण्डित्यपूर्णया व्याख्यया समलङ्कृता । इत: पूर्वमपि स्व०वेदानन्द स्वामिवर्यै: "ब्रह्मोद्योपनिषत्' नामकं पुस्तकं प्रकाशितमासीत् । एवमार्यसामाजिकसंन्यासिवर्यैरेषोपनिषत् परम्परा पुन: प्रचाल्यते इति धन्यवादार्हा एते स्वामिवर्या: । भारतवर्षस्य गृहे गृहे योगिनो ब्रह्मवेत्तार: समुत्पद्येरन्नित्यस्त्यस्माकमभिलाष: ।

## समाजसन्देश:

( संक्षिप्तं कांग्रेसीयमैतिह्यम् )

लेखक:--श्री आचार्य: विष्णुमित्र: शास्त्री ।
विद्यापीठ भैंसवालकलां हरियाणा

विद्यापीठ हरयाणाभैंसवालकला गुरुकुलस्य तथा कन्यागुरुकुलखानपुरस्य चेदं मासिकं पत्रं समाजसन्देशनामकम् । अत्र अप्रेल मई १९७३ मासयोर्द्वयो: सम्मिलितोऽयमङ्क: । अस्मिन् विशेषाङ्के संक्षिप्तं कांग्रेसीयमैतिह्यं संस्कृतभाषायामुपनिबध्य प्रकाशितं वर्तते । अधुना संस्कृतभाषायां ग्रन्थलेखनं स्वान्त: सुखाय गीर्वाणवाण्याश्चाहैतुक्यैसेवायै वा भवति । यत: केचन पुरुषा एव तादृशान ग्रन्थान् क्रीणन्ति । अतीवसंक्षिप्तमिदमैतिह्यं सरलसंस्कृतभाषायामुपनिबद्धं तस्य रूपरेखामात्रं विद्यते । छात्रेभ्य: संस्मरणाय संक्षिप्तमैतिह्यमेव महदुपकारकारि भवति । कांग्रेसस्यैतिह्यमपि विभिन्नदलानामैतिह्यमिव ह्रासस्य निदर्शकं विद्यते । पूर्वमस्य दलस्य स्वर्णीययुगमासीत् । अधुना तु तद्विपरीतमिति नात्र संशीतिलेशोऽपि ।

--भगवद्दत्तो वेदालंकार:

# सम्पादकीय टिप्पण्यः

## विश्व कप हौकी सान्मुख्यम्

हौकी जागति भारतवर्षस्य या ह्रासोन्मुखी स्थितिःपूर्वं दृग्गोचरी भवति स्म तां दर्शं दर्शं हठान्मुखान्निः सरति स्म यदद्यापि भारतवर्षे न कोऽपि ध्यानचन्दः समुत्पन्नः । परं हौलेण्डदेशस्य एमस्टर्डम नगरे समायोजितायां विश्वकपहौकी-प्रतियोगितायां भारतीयदलेन यत् क्रीडालाघवं प्रदर्शितं तेनानुमीयते यत् सततप्रयत्नेन पुनरपि सर्वशिरोमणिपदं प्राप्तुमर्हति देशोऽयम् । जर्मनहालेण्ड देशवास्तव्या अस्मिन् क्षेत्रे परिश्रमबलेन शिक्षिता जाताः । परमेतदपि सत्यं यदेते विदेशीया यन्त्रादिनिर्माणे हस्तकौशलसम्पन्ना अप्यस्यां क्रीडायां हस्तलाघवविहीना एव सन्ति । ते न केवलं दण्डकाष्ठेन (हौकिना) क्रीडन्ति प्रत्युत देहबलेनाधिकं क्रीडन्ति । स्कन्धहस्तघातैरन्यप्रहारैर्वा ते प्रकटयामासुः । तेषां विजये हस्तलाघवं, कौशलं वा नाधिकं साहाय्यकरमिति वृत्तपत्राणां पठनेन ज्ञायते । अस्मन्मते क्रीडानियमेष्वेतादृशं परिवर्तनं विधातव्यं येन हस्तादिबाधा न्यूनतामापद्येत । यस्य दलस्य क्रीडनं शुद्धं स्फूर्तिजन्यं हस्तकौशलादि सम्पन्नं सर्वातिशायि भवेत् तदादर्शं मन्तव्यरणीयम्। तस्मै अपि पृथक् रूपेण सुवर्णपदकः प्रदातव्यम् । अस्मिन् विश्वकप हौकी सान्मुख्ये विजयालाभे सत्यपि विश्वासो जायते यत् पुनरपि सर्वातिशायिनीं स्थितिमवाप्स्यति भारतवर्षः ।

## राष्ट्रगतसर्वव्याधीनां परमौषधम्-अर्थशुचिता

सर्वेषामेव शौचानामर्थशौचं परं स्मृतम् ।
योऽर्थे शुचिर्हि स शुचिर्न मृद्वारिशुचिः शुचिः ।।

यस्मिन् देशे यस्मिन् राष्ट्रे यस्मिन् समाजे यस्यां जातौ संस्थायां वाऽर्थशुचिता न भवति, असावेवाधोगतिं याति । अधुना भारतवर्षस्य या स्थितिर्दृग्गोचरी क्रियते तां दृष्ट्वा हठात् ऊर्ध्वोक्ता मानवोक्तिः सम्मुखमभ्युपैति । धर्मप्राणभारतवर्षस्याधुनाऽर्थ एव भगवान् समपद्यत । येन केन प्रकारेणार्थोपार्जनमेव भारतीयानां चरमोद्दश्यं जातम् । खाद्यपदार्थेषु मिश्रणं वस्तूनां कृत्रिमाभावं सम्पाद्यानुचितार्जनं, प्रच्छन्नकोटरेषु संगोप्य संस्थापनं, एवमेवोत्कोचभ्रष्टाचारादिदोषा एतादृशाः सन्ति यत् भारतवर्षात् शुचिता न जाने कुत्र पलायिता । अन्नभंडारः कीटावलीढः भवतु परं जनताया बुभुक्षाशान्त्यै प्रच्छन्नकोठारात् बहिर्निस्सारणं तेषां मनसि नायाति । अहंकारममकारस्यैषाऽत्यन्तनिकृष्टा परिणतिः । बाह्यपदार्थेष्वत्यन्तासक्तिः । अवसादश्चायमात्मनः । विनाशो भारतीयसंस्कृतेः । आधिपत्यञ्चासुराणामिति बोध्यम् । एवंदेशजातिसमाजसंस्थाद्यासु यत्र यत्रार्थशुचिता न भवति, अर्थस्यानुचितं प्राधान्यं भवति तत्र सत्यं विनाश इत्यवधेयम् ।

—भगवद्दत्तो वेदालंकारः ।

Violet Rays) अस्तित्वं सप्रमाणं योगसिद्धं चामनन्ति । सूर्योष्मणाग्नीन्धनविद्युच्छक्तिप्रयोगैर्यन्त्रसञ्चालनं कर्तुम् प्रयतन्ते वैज्ञानिकाः । नव्या वैज्ञानिकास्तु चन्द्रलोकयात्राम् भौमगुरुशुक्रमण्डलयात्रामपि कर्तुं चेष्टमानाः सन्ति । इत्थं सुदूरमूहापोहानन्तरं त्वज्ञाजडामन्दमतयो मूर्खाश्चापि सूर्यस्यातपप्रकाशोष्मणां प्रभावं स्वीकुर्युरेव किन्तु नवशिक्षितानां पुरतः–"सूर्य आत्मा जगतस्तस्थुषश्च"। अथवा "आकृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च । हिरण्ययेन सविता रथेन देवो याति भुवनानि पश्यन्" ॥१॥ किंवा " नवो नवो भवति जायमानोऽह्नां केतू रुचसामेत्यग्रं भागम् । विदधात्ययनं प्रचन्द्रमाः स्थिरं ते दीर्घमायुः ॥२॥ अपि च– "योऽसावादित्ये पुरुषः सोऽसावहम् ॥३॥" इत्यादीनि श्रुतिवचनानि गम्भीरज्ञानविज्ञानानुभवशबलानि समुच्चारयन् कोऽपि भारतीयः शास्त्रज्ञो विद्वान् वेदशास्त्र प्रामाण्यात् सूर्यस्य चान्येषां ग्रहाणां प्रभावसम्बन्धिनं सत्यसिद्धान्तं त्रिकालाबाधितं किलाव्यभिचारि प्रमाणयति तदा स्थूलधियोऽद्यतनाः केवलं भौतिकविज्ञानमेव विद्यासर्वस्वं मन्यमाना श्चाक्षुषप्रत्यक्षगम्येऽप्यत्र सुस्पष्टे विषये विप्रतिपद्यमानाः' सहसा सहमता न भवन्ति, नैव भवन्तीत्यहो तेषां बोधदारिद्र्यमज्ञता ज्ञानरंकता चेति वक्तव्यं भवेत् ।

न केवलं सूर्यस्यैवैकलस्य भावोऽस्मिञ्जगति विद्यते प्रत्यक्षं प्रत्युतान्येषामपि चन्द्रादीनां ग्रहाणामपि प्रकाशादीनां प्रभावो भवति नूनम् । विषयमेतं समधिकं स्पष्टीकर्तुमधुना सूर्यवच्चन्द्रस्यापि प्रभावविषये किञ्चिदुच्यते–चन्द्रस्तावज्जलपिण्डरूपः । अर्थाच्चन्द्रमसि जलीयतत्त्वानां तरलरसरूपाणामाधिक्यं वर्तते । स च पुनः सूर्यकिरणस्पर्शादेव प्रकाशते । स्वयं जलरूपोऽपि चन्द्रमाः सूर्यरश्मिभिः सम्पृक्तः शीतलां द्युतिं ज्योत्स्नारूपां सर्वतो दिक् प्रसारयति । तदेवाहुर्भास्कराचार्यवर्याः—

"तरणिकिरणसङ्गादेष पीयूषपिण्डो,
दिनकरदिशि चन्द्रश्चन्द्रिकाभिश्चकास्ति ।
तदितरदिशि बालाकुन्तलश्यामलक्ष्मी–
र्घट इव निजमूर्तिश्छाययैवातपस्थः ॥१॥

सोऽयं चन्द्रः शीतलां द्युतिमात्मीयां विकिरञ्जागतिकान् सर्वांश्चेतनाचेतनान् प्रभावयति स्वचन्द्रिकाकिरणजालैः । यथा सूर्ये प्रकाशोष्णताधिक्यं तथैव चन्द्रे रसाधिक्यं शीताधिक्यं च वर्तते । यतश्चन्द्रकिरणानां प्रभावः शीतलो रसमयश्चाल्हादकरोऽनुभूयतेऽस्माभिः । चन्द्रस्य किरणानां सूक्ष्मप्रभावान्मनः प्रहृष्यति, जलं तरङ्गायते । वनस्पतिष्वोषधिषु रसात्मकेषु तरलद्रव्येषु च रसपरिपाकस्तरलतादयो गुणाः सम्भवन्ति । चान्द्रमसं ज्योतिर्जीवानां भौतिके देहे तथौषधिप्रभृतिषु पदार्थेषु च रसं पुष्णात्यमृतमयरश्मिभिस्तस्मादेवायमोषधि - पतिरित्युच्यते । मानवानाम् व्यष्टिपिण्डे मनस्तत्त्वप्रतिष्ठा चन्द्रमसएव भवति । तदेवोक्तं श्रुतौ– "चन्द्रमा मनसो जातश्चक्षोः सूर्योऽजायत । श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥१॥ इति । स्मृतिप्रस्थानेऽपि गीतासु भगवत्पादा इममेवार्थं प्राहुः–"पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥" (गीता, अध्यायः १५, श्लोकः १४) ।

पुनः सर्वेषां सचेतनानां प्राणिनां मनस्तत्त्वनिर्माणे चन्द्रमसस्तेजसो महत्त्वपूर्णः प्रभावो भवति । एवमेव सर्वेषामेव ग्रहाणां तत्तत्तेजोविशेषाणां प्रभावाः सचेतनेष्वचेतनेष्वपि चानिवार्यतया पतन्ति । प्रत्यक्षमनुभूयमानेऽस्मिन् विषये नास्त्येवाणीयानपि संदेहशंकावसरस्तथापि विषयस्यास्य स्पष्टीकरणाय सर्वेषामेव ग्रहाणाम् प्रभावविषये श्रीमद्वराहमिहिराचार्यैर्बृहज्जातके प्रोक्तमेतच्छन्दोऽवधीयतामत्र प्रसङ्गोपात्तम्:—

"कालात्मा दिनकृन्मनस्तुहिनगुः सत्त्वं-कुजोवचो,
जीवो ज्ञानसुखेसितश्च मदनो दुःखं दिनेशात्मजः ।
राजानौ रविशीतगू क्षितिसुतो नेता कुमारो बुधः,
सूरिर्दानवपूजितश्चसचिवौ प्रेष्यः सहस्रांशुजः ।।१।।"

अस्यायमभिप्रायो यत् सचेतनानां प्राणिनाम् किलात्मतत्त्वनिर्माणे सूर्यतेजसस्तन्मात्राणां, मनस्तत्त्वप्रतिष्ठायां चन्द्रमसः, बलसञ्चारे भौमस्य, वाग्विकाशे बुधस्य, ज्ञान-सुखयोः प्रतिष्ठायां बृहस्पतेः, कामसंकल्परचनायाम् शुक्रस्य, दुःखानुभूतिसंवेदनादितत्त्वावस्थितौ शनेश्च तेजस्तन्मात्राणां प्रामुख्येनोपयोगो भवति । एवं हि जीवे षुशासनाधिकारक्षमतानिर्माणे सूर्यचन्द्रयोः, नेतृत्वशक्तिसञ्चारे भौमस्य, क्रीडाप्रियत्वसौकुमार्यमार्दवादिगुणरचनायां बुधस्य, मन्त्रित्वराजनीतिज्ञतादिगुणक्षमतानिर्माणे गुरुशुक्रयोस्तथा च दूतत्वादिगुणनिर्मितौ शनैश्चरस्य तेजसः सुमहान् प्रभावो भवति ।

नायं कल्पनाप्रसूतो भावात्मको वादविशेषः । वैज्ञानिकेन दृष्टिकोणेन विश्लेषणान्मनोबुद्धीन्द्रियगोचरो ज्ञानगम्योऽयं विषयः । वस्तुतो ग्रहाणां स्थितिः खगोले सौरमण्डले वर्तते । स्वस्वकक्षासु स्वकीयं गतिक्रममन्वटन्तो ग्रहास्तत्रत्ये वातावरणे स्वतेजसामाकर्षणविकर्षणाभ्यां ग्रहानन्यान्भूमिमण्डलं सर्वानपि खगोलस्थान् ज्योतिर्मयनक्षत्रतारकापिण्डान् प्रभावयन्तो भवन्ति, स्वयं चान्येषां तेजोरश्मिपुञ्जैः प्रभाविताः सन्तो निखिलब्रह्माण्डस्थलोकांस्तत्रस्थाञ्जडचेतनांश्च स्वप्रकाशावपातानुपातप्रमाणं प्रभावयितुं प्रभविष्णवो भवन्ति । अतोऽत्र सौरे जगति वर्तमानस्य ग्रहनक्षत्रमण्डलस्य यथार्थस्थितिपरिचयाय किञ्चिदुच्यतेऽधस्तात् :--

"भूमेः पिण्डः शशांकज्ञकविरविकुजेज्यार्किनक्षत्रकक्षा
वृत्तैर्वृत्तोवृतः सन्मृदनिलसलिलव्योमतेजोमयोऽयम् ।
नान्याधारः स्वशक्त्यैव वियति नियतं तिष्ठती हास्य पृष्ठे
निष्ठं विश्वं च शश्वत्सदनुजमनुजादित्यदैत्यं समन्तात् ।।
।।१।।"

"सर्वतः पर्वतारामग्रामचैत्यचयैश्चितः ।
कदम्बकुसुमग्रन्थिः केसरप्रसरैरिव ।।२।।"

--श्रीमद्भास्कराचार्यः, सिद्धान्तशिरोमणौ

अत्र श्रीमद्भास्कराचार्यकृतं वासनाभाष्यमपि दृश्यताम्:--

योऽयं मृदनिलसलिलव्योमतेजोमय इतिपांचभौतिको भूमेः पिण्डो वर्तुलाकारस्तब्दहिःस्थैः शशांकादिकक्षावृत्तैरावृतः सन्ननन्याधारः स्वशक्त्यैव नियतं निश्चितं वियत्याकाशे तिष्ठति । तत्पृष्ठनिष्ठं च जगत् । सदनुजमनुजादित्यदैत्यम् । दनुजा दानवाः । मनुजा मानवाः । आदित्या देवाः । दैत्या असुराः । तैः समेतं समन्तात् तिष्ठति । शेषं स्पष्टार्थम् ।

श्रीमद्भास्कराचार्यैः सिद्धान्तशिरोमणेर्गोलाध्याये यद् भारतीयखगोलविज्ञानोक्तप्रकारेण ग्रहादीनां स्थानादिकमुपवर्णितं तत्र सर्वादौ केन्द्रमध्यवर्ति भूमण्डलं, ततो विधुबुध-शुक्र-सूर्य-भौम-गुरु-शनीनां कक्षावृत्तानि क्रमशो वर्तन्ते, ततो नक्षत्रमण्डलमास्त, इत्येव भारतीयज्यौतिषाचार्योक्तः खगोले भूमण्डलग्रहमण्डलानां कक्षाक्रमः ।

श्रीभास्कराचार्यवर्यैः स्वकीयस्य सिद्धान्तशिरोमणिग्रन्थस्य गोलाध्याये या ग्रहस्थितिर्भूमिं केन्द्रमत्वा वर्णिता तां सम्यगवबोद्धुमेकं चित्रमधस्ताद्दीयते, तत्साहाय्येन पाठकाः स्पष्टं ज्ञातुं शक्नुयुः--

( क्रमशः )

## वसन्तोत्सव (होलिका पर्व) सन्देशः

आचार्य धर्मदेवो विद्यामार्तण्डः (देवमुनिर्वानप्रस्थः)

सदा प्रसन्ना भवतेह सन्तः,
'वसन्तवल्लोक इहाचरन्तः ।'
दुःखं परेषामपि दूरयन्तः,
सद्धृदया देववरं स्मरन्तः ॥

देवोऽस्ति नित्यं करुणाकरोऽसौ,
शान्तेः प्रहर्षस्य विधायकोऽसौ ।
तमेव नित्यं मुदिता भजध्वं,
ध्याने तदीये सततं रमध्वम् ॥

लीला तदीया सुखदास्त्यनन्ता,
गायन्ति तां शुद्धधियो हि सन्तः ।
दिशन्ति नित्यं प्रदिशो हसन्तः,
विलोक्य तां नित्यमिहारमध्वम् ॥

न रोदितुं विश्वमिदं विचित्रं,
विनिर्मितं तेन दयामयेन ।
अस्मान् सुतान् मोदयितुं सदासौ,
लीलां मनोज्ञां तनुते समन्तात् ॥

सम्मोदमत्ता भवताप्रमत्ताः,
स्वकीयधर्मं परिपालयन्तः ।
सदा हसन्तश्चरितैः पवित्रैः,
जनान् समस्तानपि हासयन्तः ॥

अयं वसन्तोत्सव एतमेव,
ददाति सन्देशमनुग्ररुपम् ।
'प्राञ्चो अगाम नृतये हसाय,'
वेदस्य सन्देशमिमं श्रृणुध्वम् ॥

## गुरुकुल पत्रिका के नियम

१ 'गुरुकुल पत्रिका' मासिक है। यह प्रत्येक अंग्रेजी मास की १२, १३ तारीख को प्रकाशित होती है।

२ यह आधी संस्कृत में तथा आधी हिन्दी में होती है। इस में कवर समेत प्रायः ४४ पृष्ठ होते हैं। वर्ष में एक या दो विशेषांक लगभग १२०-१५० पृष्ठों तक के होते हैं।

३ इसमें प्रमुख रूप से लेख वैदिक-साहित्य, भारतीय-संस्कृति-सम्बन्धी होते हैं।

४ वार्षिक मूल्य देश में ४) और विदेश में ७) है, जो धनादेश (मनीआर्डर) द्वारा ही **"सम्पादक : गुरुकुल-पत्रिका"** के नाम से आना चाहिए। ग्राहक कभी भी बन सकते हैं।

५ लेख छोटे, सारगर्भित तथा मौलिक होने चाहिएं। शुद्ध, सुपाठ्यातथा कए ओर लिखे होने चाहिएं। लेख, कविता तथा समालोचनार्थ पुस्तकें (२ प्रतियां), परिवर्तनार्थ पत्र-पत्रिकाएं सम्पादक के नाम भेजनी चाहियें।

६ किसी लेख अथवा कविता आदि के प्रकाशित करने या न करने, घटाने-बढ़ाने या संशोधन करने का अधिकार सम्पादक को है। बिना डाक खर्च भेजे अप्रकाशित कविता वा लेख लौटाये न जा सकेंगे।

**सम्पादक—गुरुकुल पत्रिका, डाकघर : गुरुकुल कांगड़ी**

**जिला : सहारनपुर ( उ० प्र० )**

( जनवरी १९७४ मासाङ्कतोऽग्रे )

# अथ प्रकाशाभ्युदयोनाम

डा. मंगलदेव शास्त्री

## महाविद्यालयस्य द्वितीयोपाधिवितरणोत्सवोऽनुसन्धानसंस्थान-प्रारंभोत्सवश्च

१९४७ वर्ष इव १९४८ वर्षेऽपि ३०।१।१९४८ दिनांके महाविद्यालयस्य द्वितीयोपाधिवितरणोत्सवो निरवर्त्तत यथापूर्वं महता समुत्साहेन । तेनैव सह तस्मिन्नेव दिनांकेऽनुसन्धानसंस्थानप्रारम्भोत्सवोऽप्यभवत् । तस्मिन्नुत्सवे सभापतिरासीत् प्रान्तीयशिक्षामन्त्री माननीय श्रीसंपूर्णानन्दः, प्रवक्ता च म० म० श्री पं० गिरिधरशर्मचतुर्वेदः ।

उत्सवद्वयानन्तरमामन्त्रितानां महानुभावानां विशेषातिथीनां च सभाजनार्थमुद्यानगोष्ठी प्रस्तुतासीत् । तस्याश्च प्रायेण समाप्तेरनन्तरमेव प्रस्थितेषु प्रस्थानोन्मुखेषु चातिथिषु सहसा विश्वस्य जगतो वज्राघात इव विश्ववन्द्यस्य महात्मनो गान्धेः प्राणहत्याया वृत्तान्तः श्रुतिपथमागतो वेपमानहृदयानां साश्रुमुखानां च सर्वेषामुपस्थितानाम् ।

स्वर्गस्थितानां सहसा नरकस्य दुःखसागरे पातनमिवान्वभूम सर्वेऽपि वयं तत्रोपस्थिताः !!! हा ! हन्त ! महद् दुर्भाग्यमेतन्न केवलं भारतस्य, किन्तु सर्वस्यापि जगतः !!!

**सत्याहिंसावतारो वै चिरदास्यादमोचयत् ।**
**चारित्र्यस्य बलेनैव भारतं, महदद्भुतम् !।।१।।**
**विश्ववन्द्यो महात्मा यो दीनोद्धारायणः ।**
**सर्वोदयमहामन्त्रऋषिर्हन्त ! हतोऽद्य सः !।।२।।**

हृदयोन्माथिनी वेदनैषा सर्वैरप्यन्वभावि तदा ।

## उत्तरप्रदेशीय संस्कृतपाठशाला पुनर्व्यवस्था-समितिः

(१९४७–१९५०)

महाविद्यालयीयवृत्तान्तस्य मध्येऽस्याः समितेर्विषयेऽपि किञ्चित्कथनमावश्यकम् । महाविद्यालयस्य प्रधानाचार्यपदमधितिष्ठतो मम पदेन प्रदेशीय संस्कृतपाठशालाभिः सहापि नैकरूपः संबन्ध आसीदिति पूर्वमुक्तम् । ततश्चास्याः समितेरुल्लेखोऽत्र नैवाप्रासंगिकः ।

**१७-११-१९४७ दिनाङ्के शासनेन समितिरेषा न्ययुज्यत । अस्याः सदस्या एवमासन्—**

(१ डा० मङ्गलदेव शास्त्री, सभापतिः ।
(२) पं० त्रिभुवनप्रसादोपाध्यायः (संस्कृतपाठशालानिरीक्षकः) ।
(३) पं० अलगूरायशास्त्री (एम.एल.ए.) ।
(४) पं० कमलाकान्तमिश्रः (गोइनकासंस्कृतमहाविद्यालयस्य प्रधानाचार्यः) ।
(५) डाक्टर बाबूराम सक्सेनामहोदयः, प्रयागविश्वविद्यालयात् ।
(६) म० म० श्रीगिरिधरशर्मचतुर्वेदः ।
(७) श्रीहरिदत्तशास्त्री, संस्कृतपटलस्य सदस्यः (शिक्षासंचालकद्वारा नियुक्तः ।

पं० शिवनाथ झारखंडी (सरस्वती भवन पुस्तकालयाध्यक्षः) असदस्यो मन्त्री । परं शिवनाथझारखंडी महोदयस्य, स्वपदादवकाशग्रहणकारणात्तस्य मन्त्रित्वपदं १५।४।१९४८ दिनांके प्रथमं पं० श्रीकुबेरनाथशुक्लेन, तदनन्तरं च श्रीवीरेन्द्राग्निहोत्रिणा गृहीतमासीत् ।

## समितेः प्रगतिः प्रतिवेदनं तत्परिणामश्च

समितेः प्रथमाधिवेशनं २४–२७।६।१९४८ दिनांकेषु अन्तिमं चाधिवेशनं २३।३।१९५० दिनांकेऽभवत् ।

समित्या तत्तदुपायैः पूर्णसावधानतापूर्वकं स्वविचारणीयविषयाणां सम्यगध्ययनं विवेचनं च विधाय स्वकीयप्रतिवेदनं यथाविधि प्रस्तुतीकृत्य सर्वसंमत्या सहस्ताक्षरं स्वीकृत्य च स्वसभापते-र्डाक्टरमङ्गलदेवशास्त्रिणो द्वारा ६।४।१९५० दिनांके शासनसन्निधे प्रेषितम् ।

अज्ञातकारणैस्तत्प्रतिवेदनं न कदापि प्रकाशितमभवत् । प्रतिवेदनेन प्रकाशमानीता नैकपाठशालानां दुरवस्था कदाचित्तस्यैकं कारणं भवेत् । सभापतिना स्वयं निरीक्षितासु पाठशालासु यत्रतत्र मिथ्यापाठशालाः ( = केवलमर्थोपार्जनार्थं तथा जनताया वञ्चनार्थमपि स्थापिताः पाठशालाः ) अपि दृष्टिपथमागताः !

तथापि नात्र संदेहो यत्प्रतिवेदनेनानेन महदुपकृतं पाठशालानाम् । पाठशालानां प्रगत्यै यदपि कार्यम् (अध्यापकानां वेतनवृद्धिः, आर्थिकसहायताया वृद्धिः, तासां वर्गीकरणम्, निरीक्षकाणां संख्याया वृद्धिरित्यादिकम्) शासनेन तदनन्तरं कृतं तस्य सर्वस्य मूले तदस्माकं प्रतिवेदनं तद्गताः प्रस्तावाश्चैव विद्यन्ते । तदत्र नः परमः सन्तोषः ।

### प्रधानाचार्यपदादवकाशग्रहणम्, शिक्षा विशेषाधिकारिपदे नियुक्तिश्च (१९४८)

ममैतज्ज्ञातमासीद् यत् प्रधानाचार्यपदाद् अथवा राजकीयसेवाया मया ३०।६।१९४८ दिनांकेऽवकाशो ग्रहीतव्य इति । तत्कालपर्यन्तं न मया कोऽप्याकस्मिकोऽन्यप्रकारको वावकाशः कदाचिदपि गृहीत आसीत् ।

अतस्तस्यैव वर्षस्य जनवरीमासस्यानन्तरं मया कदाचिन्माननीयः शिक्षामन्त्री श्रीसम्पूर्णानन्दः पृष्टो यन्नियमानुसारमहं राजकीयसेवातः पूर्णाविकाशग्रहणात् प्राग्भाविनमवकाशं ग्रहीतुमिच्छामि, किं तद् भगवतानुमतं भविष्यति ? तेन, तत्तद्योजनानां कार्यान्वयने ममोपयोगितामाकलय्य, तन्नानुमतम् । उक्तं च यद् भवतां राजकीयसेवाकालस्य, अवशिष्टकार्यस्य हेतोः, शासनेन वृद्धिः करिष्यत इति !

शिक्षामन्त्रिणामेष विचारः कथञ्चिद् निष्कारणं स्वभावतोऽस्मद्विरोधपरायणैः प्रतिक्रियावादिभिरवगतः । मम कार्यकालस्य वृद्धिस्तेषां नैवेष्टासीत् । तैर्गुप्तमन्त्रणा कृता । निर्धारितं च यदेकं संकीर्णविचारपराणां प्रतिक्रियावादिनां वाराणसेयवृद्धपण्डितानां शिष्टमण्डलं स्वविरोधप्रदर्शनार्थं प्रदेशीयमुख्यमन्त्रिणां श्रीगोविन्दवल्लभपन्तमहोदयानां सेवायामुपस्थितं भवत्विति । एतन्निश्चयानुसारं ते श्रीपन्तसेवायामुपस्थिता अभवन् । तत्समक्षं च कथमपि कृत्रिमोपायैः साश्रुमुखैस्तैः प्रभाववता नाटकीयप्रकारेण मम कार्यकालस्य वृद्धि प्रस्तावमुद्दिश्य स्वकीयस्तीव्रो विरोधो निवेदितः । कश्चित्प्रयागस्थो नाट्यकलापटुस्तेषां तस्मिन्निवेदने नेतृत्वमकरोत् । श्रीसंपूर्णानन्दोऽपि तत्रासीत् । तद्द्वारैव एष समाचारः शनैः शनैरन्येषामपि कर्णगोचरतां गतः ।

मम कार्यकालस्य वृद्ध्या तथाकथितधर्मस्य महाननर्थो भविष्यतीति श्रुत्वा सरलमतिना श्री पन्तेन कार्यकालवृद्धेः प्रस्तावं प्रति स्वकीया अरुचिः प्रदर्शिता । ततश्च मम कार्यकालवृद्धेः प्रसङ्गः सर्वथा समाप्त एव ।

ततः क्रमेण ममावकाशग्रहणस्य समय उपस्थितः । २८।६।१९४८ दिनांके तडित्संदेशः शासनसकाशात्प्राप्तो यत् ३०।६।१९४८ दिनांकेऽवकाशं गृह्णता मया प्रधानाचार्यपदाधिकारो म०म० श्रीनारायण, शास्त्रिखिस्ते महोदयाय ( सरस्वतीभवनपुस्तकालयाध्यक्षाय) समर्पणीय इति ।

(क्रमशः)

# महाकविश्रीव्यासगौरवम्

डा० अमरनाथ पाण्डेय:, एम० ए०, डी० फिल०

साहित्यसर्वस्वविधानदक्षो व्यास: कवीनां नृपतिर्बभूव ।
तस्य प्रकृष्टै: कविकर्मबन्धैरालोकिता लोकसमर्चिता ये ।। १

मनीषिलीलालिभिरात्मबोधं राज्ञां चरित्रैर्व्यवहारकोषम् ।
मुनीन्द्रनिध्यातरहस्यरत्नं जग्रन्थ काव्ये जनताहिताय ।। २

व्यासस्य संयोजनया प्रसन्ना लोका: प्रशंसन्ति तदीयवृत्तम् ।
ये ये प्रसङ्गा निहिता मनोज्ञास्तेषां गुरुत्वं प्रथितं कथासु ।। ३

वृत्ते महाभारतनामधेये तत्त्वं निगूढं विबुधैर्विमृष्टम् ।
व्याख्याकदम्बैरपि पूजितं यत् तद् भारतं भारतदेशरत्नम् ।। ४

शिक्षाप्रसन्नोक्तिविलासिनीनां दीप्ति: प्रकृष्टाऽविरतं चकास्ति ।
तत्र प्रगीतेषु महत्सु सम्पत् काचित् समिद्धा हृदि भावनीया ।। ५

आचारसन्तानसमेधितानि पर्वाणि सर्वत्र हितं वहन्ति ।
तेषां विलास: कविवृन्दपूज्य: सृष्टिश्च तेषां सरसा विभाति ।। ६

खिन्नं प्रसादयति बोधयति प्रमुग्धं ज्ञानप्रकाशकिरणैर्दिशति व्यवस्थाम् ।
नीतिं प्रसारयति भेदविधाभिरच्छां तद् भारतं जगति गौरवमातनोति ।। ७

भक्तिप्रवाहपरिपूरितदिग्विभागं सद्वृत्तबोधितकवीन्द्रगृहीतकाव्यम् ।
युद्धस्फुरद्भटसमर्चितपादपद्मं व्यासं मुनिं कविगुरुं शिरसा नमामि ।। ८

आयोधनेषु सुभटैर्निजाहुदण्डै: शस्त्रास्त्रभूषितकरै: प्रकटीकृतं यत् ।
नीतेर्विलासकलयाऽचलया प्रणीतं तद्भारतेऽमरगिरा रचिते पवित्रे ।। ९

विज्ञानवैभवमनाकुलमादधानैर्योगार्थसिद्धिलतिकाञ्च समीहमानै: ।
प्रासङ्गिकैरमितभावकथावितानैराविष्कृतं किमपि वस्तु मदीयदेशे ।। १०

भारतं भारतं रत्नं लोके सर्वत्र विश्रुतम् ।
धार्यते हृदये सद्भि: सदा मङ्गलकाङ्क्षया ।। ११

इदमेव परं तीर्थं तपश्चेदमनुत्तमम् ।
मित्रं हितकरं लोके तत्समीपे सुखं महत् ।। १२

# सम्पादकीय टिप्पण्यः

## निर्वाचनम्

१९७४ ईस्वीये फर्वरीमासे उत्तरप्रदेश ओडिसा मणिपुर नागालैण्ड पाण्डिचेरी प्रदेशेषु निर्वाचनं प्रायः सर्वत्र शान्तिपूर्णवातावरणे सुसम्पन्नमभूत् । निर्वाचनपरिणामान्समक्षिलक्ष्यी कृत्य साश्चर्यमिदं वक्तुं शक्यते यत् चमत्कारः समजनि । सर्वत्र सर्वक्षेत्रेषु भ्रष्टाचारः सीमातीतमहर्घता खाद्यवस्तूनां कृत्रिमोऽभावो विषदिग्धपदार्थानां मिश्रणमित्यादिनरकयातनाभिः प्रपीडिता जनता पुनरपि कांग्रेसदलं सत्तारूढं विदधाति नावलोकयन्ती किमप्यन्यदलं सिंहासनारोहणक्षमम् । नानुचितं तदेतदङ्गीकरणं यत् सामान्यजनतासु विशेषतोधःपतितेषु सत्तायाः प्रभावः स्वकार्यं करोत्येव । अद्याप्यस्माकं मनःस्थितिरोजोबहुला न विद्यते । एतादृशीं हीनदशामवाप्ताः स्म यदेकश्वासेन कांग्रेसाय गालिं वोटं चोभयं प्रदद्मः । केचन ब्रुवते यत् पञ्चषरूप्यकाणां सामयिकेन लाभेन परितुष्टा अज्ञाः किं सत्यं लोकतन्त्रोचितं निर्वाचनं कर्तुमर्हन्ति । नाहं कस्यापि विशिष्टदलस्य विरोधेऽस्मि । कांग्रेसो वा जनसंघो वा समाजवादो वा कम्युनिष्टो वा यो वा को वा भवेत् भारतवर्षे तु प्रायः सर्वे समनस्काः समधरातले संस्थिताः सन्ति, सन्ति चैकस्यैव क्षेत्रस्य मूलानि । परमोच्चशिखरस्थितां भारतीयसंस्कृतिमनुरुध्योपत्यकामेव सम्प्राप्ताः एते । परमतेजस्विनस्तपस्त्यागमूर्तयो राक्षसचाणक्यप्रभृतयो महामन्त्रिणोऽद्यापि दृष्टिपथं न याताः । अस्मन्मते तु २५ प्रतिशतं ३०प्रतिशतं वोटस्यावाप्तिः सिंहासनमारोढुं जनताया आदेश इति न मन्तव्यम् ।

अन्यच्च, निर्वाच्यनिर्वाचकयोरुभयोरपि कश्चिद् योग्यतामानदण्डो निर्धारणीयः । तत्र निर्वाच्यस्त्यागी तपस्वी सुपठितः शिष्टैर्गुणैः समलंकृतः स्यात् । एवं निर्वाचकोऽपि कथञ्चित् पठितस्तु भवेत् । अनेन निर्वाचनेन जातिदोषो दृढमूलतां यातः । धनस्यापि निकृष्टः प्रभावः सर्वेषामुपरि पतितः । अतोऽस्मन्मते तादृशा नियमा विधातव्या येन सर्वमलापेतं शुद्धं पवित्रं निर्वाचनं जायेत ।

## गुजरातप्रदेशे विक्षोभः

गुजरातप्रदेशे यो विक्षोभः श्रूयते प्रत्यहं वृत्तपत्रेषु च पठ्यते । तेनानुमीयते यत् जनतायाः साम्प्रतं हि मनः परिवृत्तिमगात् । न तदद्यतनीयं शासनमभिवाञ्छति । तत्र विक्षोभस्य पूर्वं कारणं खाद्यवस्तूनां कृत्रिमोऽभाव एव विद्यते । यदि शासनं सर्वतोभद्रं शुद्धं यभविष्यत् तत्र तद् विरुद्धं जनान्दोलनमपि नाभविष्यत् । अतोऽस्यामवस्थायां दण्डेन शासनं नोचितम् । तत्र जनता यादृशं शासनमभिवाञ्छति तत् प्रदातव्यमित्यस्त्यस्माकं दृढोविश्वासः ।

## भारतीय प्राचीन राजनीति

लेखकः—स्व० श्री पं० भगवद्दत्तः बी० ए०

प्रकाशकः—रामलाल कपूरट्रस्ट, बहालगढ़, सोनीपत (हरयाणा, मूल्यम्–)७५ ।

मम सनामो दिवंगतः श्री पं०भगवद्दत्तः बी०ए० वेदादिसच्छास्त्राणां महान् विद्वान् आसीत्, इति सर्वे विजानन्त्येव । भारतीयैतिह्यसम्बन्धेऽपि अनेन विदुषाऽतीव पाण्डित्यपूर्णं प्राक्तनसाहित्यमवगाह्य सत्यपूर्णं 'भारतवर्ष का इतिहास' इति नामकं भागद्वयसंवलितं पुस्तकं प्रकाशितम् । एवमनेके ग्रन्था अनेन पण्डितवर्येण स्वजीवने विलिख्य प्रकाशिताः । भारतीयराजनीतिविषयेऽस्यां पुस्तिकायां स्वविचाराः सुष्ठुरूपेण दिग्दर्शिताः । मन्ये मनुस्मृत्यादिषु महाभारतादिमहाकाव्येषु कौटिल्याद्यर्थशास्त्रेषु विस्तरेण राजनीतिसम्बद्धा विचारा बहुशः प्रपञ्चिताः । तानेवाङ्गीकृत्य सूक्ष्मरूपेण दिग्दर्शनमस्यां पुस्तिकायां कृतं पण्डितवर्येण । सर्वैः पुरुषै विद्वद्भिश्च पुस्तिकैषाऽवश्यमवलोकनीयेति ।

## पाणिनीयं शब्दानुशासनम्

प्रथमो भागः

प्रकाशकः—रामलालकपूर ट्रस्ट, बहालगढ़, सोनीपत (हरयाणा) सजिल्दम्–४) ।

पाणिनिव्याकरणस्य शुभ्रं यशो व्योमनि ज्योतिरिवार्कस्य सर्वत्र प्रसृतं विद्यते । पाश्चात्यविदुषां मते व्याकरणमिदं मानवमस्तिष्कस्य सर्वोत्तमकृतित्वेन जगति विराजते । पुराकालेऽष्टाध्यायीसाहाय्येन स्वल्पकाल एव व्याकरणाभिज्ञो भवति स्म । परं यदा प्रक्रियाग्रन्थानां प्रचारः समभवत् तदा दीर्घकालाध्ययनरतोऽपि विद्यार्थी पूर्णपाण्डित्यं न प्राप्नोति स्म । अतः पुनरपि अष्टाध्यायीक्रमेण व्याकरणस्याध्ययनं प्रचालनीयम् । प्रारम्भे सूत्राणां कण्ठस्थीकरणे पुस्तकमिदमतीव साहाय्यकरं विद्यते । अस्मिन् प्रस्तुतपुस्तके प्रदत्तानां परिशिष्टानां तथा लघुवृद्धादिपाठानां दर्शनेनास्य महत्त्वमधिकं समजनि ।

अस्मन्मते तु सूत्रसम्बद्धा वार्तिकगणादयोऽपि सूत्राणामधस्तात् यथोचितस्थाने निवेशनीया येन सूत्रसम्बद्धवार्तिकैस्तत् कार्यमवगतं भवेत् ।

भगवद्दत्तो वेदालंकारः
सम्पादकः

जनवरी १९७४ से आगे --

# महर्षि दयानन्द की विश्वदर्शन को देन

( Contribution of Dayananda to world philosophy )

श्री प्रो. जयदेव वेदालंकार

## पंचम परिच्छेद

## आत्म-मीमांसा

चार्वाक दर्शन सम्पूर्ण सृष्टि की उत्पत्ति केवल प्रत्यक्ष प्रमाण को मानते हुए पृथिवी, जल और वायु नामक चार भूतों से मानता है। इस दर्शन में आकाश को स्वीकार नहीं किया गया है। क्योंकि आकाश का प्रत्यक्ष नहीं होता है। आकाश प्रत्यक्ष का विषय ही नहीं, अतएव सम्पूर्ण जगत् उपर्युक्त चार भूतों से ही बना है। इन्हीं चार भूतों के विशेष योग से चैतन्य की उत्पत्ति होती है।

प्रत्यक्ष से ग्रहण न होने के कारण आत्मा का कोई पृथक् अस्तित्व नहीं है, जैसा कि आस्तिक दर्शनकार उल्लेख किया करते हैं। क्योंकि वह न तो घटादि की तरह बाह्येन्द्रियों से और न सुख आदि की तरह मन से ग्राह्य होती है। अनुमान प्रमाण तो चार्वाक मानते ही नहीं। इसके अतिरिक्त आत्म सिद्धि में कोई लिङ्ग भी नहीं है, क्योंकि चैतन्य की इन चार भूतों से अतिरिक्त कोई सत्ता नहीं है। चेतनता रहित इन चार भूतों के विशेष प्रकार से मिश्रित होने पर तथा शक्ति के आधिक्य से चैतन्य गुण उत्पन्न हो जाता है, जैसे कि मद-शून्य जौ आदि के संयोगजन्य सुरा में मदशक्ति की उत्पत्ति होती है[1]। समय बीतने पर व्याधि के कारण जब शक्ति का भय हो जाता है तो शरीर चेतनाविहीन हो जाता है। चैतन्य के रहने पर यह चार भूतों से निर्मित शरीर ही स्मृति, अनुसंधान आदि व्यवहार का निर्वाह करता है।

सब मनुष्य अपने विषय में ऐसा व्यवहार करते हैं कि "मैं स्थूल हूं, मैं कृश हूं।" इस वचन में "मैं" और "स्थूल" तथा "कृश" के समानाधिकरण से भी इसी निर्णय पर पहुंचा जाता है कि देह ही "मैं" अथवा "आत्मा" हैं, क्योंकि स्थूलता आदि देह के ही धर्म हैं, किसी दूसरे के नहीं। "यह मेरा देह है" इस प्रकार के वचन भी आत्मा और देह के भेद को नहीं सिद्ध कर सकते हैं। क्योंकि–ये तो उसी प्रकार एक होने पर भी गौण रूप से द्वैतप्रतिपादक हैं, जिस प्रकार राहु का शिर।[2]

न स्वर्ग नाम की ही कोई वस्तु है, न मोक्ष ही, न आत्मा, और न परलोक ही है। वर्णाश्रम धर्म की अनेक प्रकार की क्रियायें भी किसी प्रकार के फल को देने में सहायक नहीं हैं।[3] इसलिए (इन सब के न होने से) जब तक जीवन है तब तक सुखपूर्वक रहना चाहिये। सुख प्राप्ति के लिए यदि किसी से

---

१. किण्वादिभ्यः समेतेभ्यो द्रव्येभ्यो मदशक्तिवत्।
अहं स्थूलः कृशोऽस्मीति समानाधिकरण्यतः ॥

२. देहस्थौल्यादियोगाच्च स एवात्मा न चापरः।
मम देहोऽयमित्युक्तिः संभवेदौपचारिकी ॥
स.द.सं.पृ ७ ॥

३. न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः।
नैव वर्णाश्रमादीनां क्रियाश्च फलदायकाः ॥
स.द.सं.पृ० १३ ॥

ऋण लेना पड़ जाये, तो भी घृतादि के पान के लिए लेना चाहिये (यह नहीं विचारना चाहिये कि इस ऋण को आगामी जन्म में लौटाना पड़ेगा )। दूसरे जन्म से डरना व्यर्थ है, क्योंकि जिस शरीर को मर जाने पर जला दिया जायेगा, वह लौटकर नहीं आ सकता ।४

केवल युक्तियां ही नहीं, अपितु निगम भी इसी सिद्धान्त के प्रतिपादक हैं, क्योंकि उनमें भी इस प्रकार के वचन मिलते हैं कि "यह आत्मा महान् है, अनन्त है, अपार है। वह विज्ञानमय ही है। इन महाभूतों से उठकर यह इन्हीं में विलीन हो जाता है। विनष्ट हो जाता है। मरकर इसका ज्ञान वा नाम नहीं रहता।" इस प्रकार के प्रसंगों व तर्कों से स्पष्ट है कि आत्मा पृथिव्यादि चार भूतों के संयोग से उत्पन्न होने वाली शक्ति के अतिरिक्त अन्य कुछ नहीं है ।५

अन्य स्थलों पर भी चार्वाक दर्शन के उन सिद्धान्तों को दर्शाया गया है जिनमें देहात्मवाद की चर्चा की गई है। जैसे—प्रमाण के विषय में केवल प्रत्यक्ष प्रमाण और उसके द्वारा प्रमाणित पदार्थों की सत्ता मानते हुए 'सर्वसिद्धान्त संग्रह' तथा 'षड्दर्शन समुच्चय' में लिखा है कि जिसका प्रत्यक्ष द्वारा बोध होता है, उसी का केवल अस्तित्व स्वीकार किया जाता है। अदृष्ट का कदापि नहीं, क्योंकि वह कभी देखा नहीं गया। अदृष्टवादी भी ऐसा ही कहते हैं कि अदृष्ट अर्थात् आत्मा, परमात्मा, धर्म, अधर्म व स्वर्ग-नरक और मोक्षादि कभी भी देखे नहीं गये ।६

इसी प्रकार शास्त्र-श्रवणादि के द्वारा देखे गए को भी अदृष्ट माना है। और जो अदृष्ट है उसके बारे में कहा भी नहीं जा सकता, क्योंकि वह तो हमेशा ही अदृष्ट है। जो हमेशा ही अदृष्ट है, उसे सत् कैसे कह सकते हैं। जैसे खरगोश के सींग हमेशा ही अदृष्ट होते हैं ।७

अतः जिन पदार्थों को हम देख सकते हैं, प्रत्यक्ष कर सकते हैं, वे ही हैं, अन्य नहीं। स्वर्ग-नरक, धर्म-अधर्म और मोक्ष आदि तो कल्पनामात्र हैं, इनका वास्तविक अस्तित्व कोई भी नहीं ।८

यह पहले भी कह दिया गया है कि भूतों के शरीर-आकार में विशेष प्रकार के सम्मिश्रण से चैतन्य उत्पन्न होता है। चैतन्यविशिष्ट देह ही आत्मा है। क्योंकि इस प्रकार की प्रतीति एवं व्यवहार से कि "मैं स्थूल हूं, तरुण हूं, वृद्ध हूं, युवा हूं," ऐसी प्रतीति होता है कि देह ही आत्मा है। शरीर से भिन्न कोई आत्मा नहीं है। जड़भूतों के विकारमात्र से शरीर में जो चैतन्य उपलब्ध होता है, वह तो ताम्बूल, सुपारी और चूना में पृथक्-पृथक् लाल रंग के न

---

४. यावज्जीवेत्सुखं जीवेत्ऋणं कृत्वा घृतं पिबेत्।
भस्मीभूतस्य देहस्य पुनरागमनं कुतः ।।
सं०द०सं०पृ० १४ ।।

५. विज्ञानघनएवैतेभ्यो भूतेभ्यः समुत्थाय
विनश्यति न प्रेत्य संज्ञास्ति ।।बृ० उ० २,४,१२ ।।

६. प्रत्यक्षगम्यमेवास्ति नास्त्यदृष्टमदृष्टतः।
अदृष्टवादिष्टमिथ्यापि नादृष्टं दृष्टमुच्यते ।।
स.द्वि.सं. २।२

७. क्वापि दृष्टमदृष्टं चेददृष्टं ब्रुवते कथम्।
नित्यादृष्टं कथं सत्स्यात् शशशृङ्गादिभिरसमम् ।। स.सि.सं. २, ३।।

८. एतावानेव लोकोऽयं यावानिन्द्रियगोचरः।
भद्रे पश्य यद्वदन्ति बहुश्रुताः ।।ष.द.सं.८१।।

होने पर भी सबके संयोग से उत्पन्न होने वाले लाल रंग के समान है।९

इससे यही निष्कर्ष निकलता है कि पृथिवी, जल, अग्नि और वायु ये चार भूत ही चैतन्य की उत्पत्ति के कारण हैं अर्थात् ये मिलाकर चैतन्य को उत्पन्न करते हैं, न कि चैतन्य इससे पृथक् अन्य तत्व है। इस प्रकार का प्रश्न करना भी व्यर्थ है कि — जड़ भूतों के योग से पर्वत आदि की तो उत्पत्ति हो सकती है पर चेतन कैसे उत्पन्न हो सकता है, क्योंकि दही और गोबर आदि के मिश्रण से बिच्छु आदि चेतन की उत्पत्ति देखी जाती है। उसी प्रकार इनके मिश्रण चैतन्य के न होने पर भी चैतन्योत्पत्ति शरीर में हो जाती है।१० इस प्रकार इन उद्धरणों से स्पष्ट है कि चैतन्य को ही देह का धर्म माना जाय, इससे पृथक् आत्मा का अलग अस्तित्व मानने की आवश्यकता नहीं है। जब आत्मा का अस्तित्व ही नहीं बनता तो मुक्ति आदि का प्रश्न ही नहीं रहता।

देहात्मवाद के उपर्युक्त महत्व का मुख्य कारण यह है कि मनुष्यमात्र की देहात्मबुद्धि बलवती है। जो कि प्रत्येक प्राणी को प्रत्यक्ष सिद्ध है। यही कारण है कि इसके अत्यन्त स्फुट होने से सर्वसाधारण को देह से भिन्न आत्मवस्तु पर सन्देह हो सकता है। और देहात्म-विषय को वह ऐसा प्रत्यक्ष समझता है कि उसमें तनिक भी सन्देह नहीं किया जा सकता है। इस प्रकार की बुद्धि का भी एक कारण है। वह कारण इस प्रकार है कि चार्वाक प्रत्यक्ष को ही प्रमाण मानते हैं। यह प्रमाण अन्य प्रमाणों से साधारणतया प्रबल है। प्रत्यक्ष से देहभिन्न आत्मा का ज्ञान नहीं होता, और केवल इतना ही नहीं, प्रत्युत सर्वसाधारण का सन्देहरहित ज्ञान भी यही है कि "मैं देह हूं।" इन सभी चीजों को लेकर अपने सिद्धान्त एवं अनुभवानुसार चार्वाक दर्शन ने केवल प्रत्यक्ष को ही प्रमाण माना। इसप्रकार देखा यह जाता है कि चार्वाक दर्शन का देहात्मवाद प्रत्यक्ष प्रमाण पर और प्रत्यक्ष प्रमाण देहात्मवाद के अनुभव पर स्थिर है।

आत्मा की जब पृथक् सत्ता नहीं है। शरीर ही आत्मा है, तब इस आत्मा का नित्यत्व नहीं बन सकता है। जो नित्य नहीं, वह मुक्त भी नहीं है। अतएव चार्वाक दर्शन की उक्ति प्रसिद्ध ही है कि मरना ही मोक्ष है"।११

चार्वाक दर्शन ने केवल प्रत्यक्ष-प्रमाण को मान कर देहात्मवाद को सिद्ध किया है फिर इन दोनों के आधार पर ही ईश्वर और आत्मा को नहीं माना है। यहां पर चार्वाक दर्शन के खण्डनार्थ शरीर से दूसरा शरीर है। जिसप्रकार मेरे देखे का आपको स्मरण नहीं होता, इसी प्रकार बाल्यकाल में देखे हुए का यौवन काल में स्मरण नहीं होना चाहिये। क्योंकि— बाल्यशरीर यौवन शरीर से परिमाण में भिन्न हैं। परिमाण का नाश आश्रयनाश के कारण होता है।

---

९. स्थूलोऽयं तरुणो वृद्धो युवेत्यादिविशेषणैः।
विशिष्टो देह एवात्मा न ततोऽन्यो विलक्षणः॥
जड़भूतविकारेषु, चैतन्यं यत्तुदृश्यते।
ताम्बूलपूगचूर्णानां योगाद्रागइवोत्थितम्॥
स.सि.सं.२७६-७॥

१०. किञ्च पृथ्वी जलं तेजो वायुभूतचतुष्टयम्।
चैतन्यभूमिरेतेषां मानं त्वक्षजमेव हि॥
पृथ्व्यादि भूतं संहत्यां तथा देहादिसंभवः।
मदशक्तिसुरांगेभ्यो, यद्वत्तद्वत्स्थित आत्मा॥
ष.द.स.६,७॥

११. मरणमेवापवर्गः॥

अतएव बाल्य शरीर के परिमाण का नाश अपने आश्रय बाल्य शरीर के नाश से ही हुआ है। इसलिए बाल्यशरीर नष्ट हो चुका है और यौवन का शरीर बाल्य शरीर से भिन्न दूसरा ही शरीर है। अत एव बाल्यकाल में देखे हुए का यौवन में स्मरण नहीं होगा। यदि कहा जाय कि बाल्य काल के संस्कार युवावस्था के शरीर में संक्रान्त हो जाते हैं। इसलिए स्मरण बन जायगा, यह बात ठीक नहीं। क्योंकि–कारण का कार्य में वासना संक्रमण नहीं होता। जैसे–माता के अनुभूत का गर्भस्थ शिशु को स्मरण नहीं होता है। इस पर भी कोई कहे कि–उपादान कारण की वासना का उपादेयमय संक्रमण माना जाय, तो भी ठीक नहीं। क्योंकि–एक परमाणुपुञ्ज से दूसरे परमाणुपुञ्ज की उत्पत्ति न होने से हाथ आदि को ही उपादान मानना पड़ता है। हाथ आदि के कट जाने पर उस कटे हुए हाथ आदि से अनुभव किये हुए विषयों का खण्ड शरीर को अनुभव नहीं हो सकेगा। खण्ड शरीर में कटे हुए हाथ के उपादान न होने कारण।१२

इस पर चार्वाक कहता है कि शरीर में जो परमाणु होते हैं, वे बाल्यावस्था तथा यौवनावस्था में एक से होते हैं। अतएव उन परमाणु के कारण बाल्यावस्था का यौवनावस्था में स्मरण हो सकता है। इसका उत्तर यह है कि–ऐसा मानने पर दो प्रकार के दोष आते हैं। प्रथम तो यह कि–लौकिक पुरुष परमाणुओं को इन्द्रियों से ग्रहण नहीं कर सकते क्योंकि–वे अतीन्द्रिय होते हैं। चैतन्य जब परमाणु में रहेगा, उस अवस्था में स्मरण आदि भी अतीन्द्रिय हो जायेंगे; क्योंकि–वह परमाणुओं का धर्म हो जायेगा। दूसरा दोष पहले ही बताया है कि–हाथ के कट जाने पर हाथ के साथ अनुभव करने वाले–आत्मा की नित्यता को सिद्ध करने के लिए शरीर से आत्मा की पृथकता को सिद्ध करना होगा। न्याय दर्शन के लेखक गौतम मुनि ने लिखा है––

"जिस को मैं आंख से देखता हूं इसी को हाथ से छूता हूं। वा जिसको हाथ से छूता हूं उसी को आंख से देखता हूं। आंख से पुस्तक को देखता हूं और हाथ से छूता हूं। इससे पता चलता है कि देखने और छूने वाली वस्तु एक ही है। यदि पुस्तक आंख से दिखाई न देती और हाथ से छूने पर नहीं आती तो हम को पुस्तक का ज्ञान न होता। हम यह नहीं कह सकते कि यह पुस्तक है। इससे पता चलता है कि जो चीज़ हाथ और आंख को काम में ला रही है – वह इन से कोई अलग है। इसी का नाम आत्मा है। आत्मा अगर अलग पदार्थ न होता तो हम ऐसा नहीं कह सकते थे कि जिसको छूआ उसी को देखा। चूंकि आंख देखती है स्पर्श नहीं करती अथवा हाथ स्पर्श करता है परन्तु देखता नहीं। इस पर आक्षेप किया जाता है कि किसी अन्य सत्ता को मानने की आवश्यकता नहीं है। विषयों की अवस्था ही ऐसी है कि आंख रूप को देखे या हाथ कठोरता को छूए। नेत्र न हो तो हम रूप को नहीं देख सकते।१३

त्वचा न हो तो हम स्पर्श नहीं कर सकते या जीभ न हो तो हम रस चख नहीं सकते थे। अतः इन्द्रियादि से अतिरिक्त किसी आत्मा की आवश्यकता नहीं है। यदि अलग आत्मा हो तो विषयों की अलग-अलग व्यवस्था न होती। इन्द्रियां अपने अपने

---

१२. नान्यदृष्टं स्मरत्यन्यो नैकं भूतमपक्रमात्।
वासना संक्रमो नास्ति न च गत्यन्तरं स्थिरे॥
न्या०कु० १, १५॥

१३. दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्।
न्याय ३।२।१।

विषय को ग्रहण करने में चेतन हैं, क्योंकि इन्द्रियों के होने न होने में विषय ग्रहण का होना न होना निहित है।" ऐसी अवस्था में अन्य चेतन से कोई लाभ नहीं। इस आक्षेप के उत्तर के लिए गौतम मुनि ने अगले सूत्र में लिखा है कि उन विषयों की व्यवस्था से ही आत्मा के अस्तित्व की सिद्धि होती है।१४ यदि कोई इन्द्रिय अनियत विषयों वाली, सब विषयों को जानने वाली, सब का ग्रहण करने वाली होती तो कोई भी उससे अलग आत्मा का अनुमान न करता। इन्द्रियां अनियत विषयों वाली नहीं हैं और न ही सब का ग्रहण करने वाली हैं।

अतः सब को जानने वाला तथा सब विषयों के ग्राहक आत्मा को मानना पड़ता है। इससे इन्कार नहीं किया जा सकता कि प्रत्यभिज्ञा चेतन का धर्म है। किसी वस्तु को देखकर पूर्वानुभव द्वारा उसकी गन्ध तथा कोमलता अथवा कठोरता आदि का निश्चित ज्ञान कर लिया जाता है। और तदनुसार सूंघने और छूने पर पाया भी जाता है इससे पता चलता है कि समस्त इन्द्रियों के विषयों का ग्राहक कोई एक आत्मा है। इसी विषय के सम्बन्ध में कणाद मुनि ने लिखा है।

प्रसिद्धा इन्द्रियार्थाः।
इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुः॥
(वैशेषिकदर्शन ३।१।१-२)।

अर्थात् प्रत्येक इन्द्रियों के अलग-अलग विषय तो प्रसिद्ध ही हैं-जैसा कि सब जानते हैं। यह प्रसिद्धि इस बात की पुष्टि करती हैं कि इन्द्रियों और उनके अर्थों से भिन्न एक ऐसी वस्तु है जिस को आत्मा कह सकते हैं। रूप का आश्रय आंख है और शब्द का आश्रय कान है। यहां प्रश्न है कि प्रसिद्धि अर्थात् ज्ञान का आश्रय क्या है? शब्द का कान पर पड़ना ही तो शब्द का ज्ञान नहीं यदि इसी को ज्ञान कहेंगे तो मृतक शरीर के भी कान में शब्द का ज्ञान होजाये। अतः मालूम होता है कि शब्द का ज्ञान इससे भिन्न है। वह जिस को होता है वही आत्मा है।

इस पर वर्धमियों का आक्षेप है कि यदि आत्मा शरीर से पृथक् है तो किसी के शरीर को नष्ट करने पर पाप नहीं लगना चाहिये-क्योंकि आत्मा तो तब भी वैसी की वैसी बनी रहती है। इस आक्षेप का उत्तर देते हुए कहा है। कि हमने यह नहीं कहा कि नित्य आत्मा का वध करना हिंसा है, अपितु नित्य आत्मा के भोग का आश्रय जो शरीर है, उसका और अपने अपने विषयों के कर्त्ता इन्द्रियों आदि का वध करना हिंसा है। जब किसी के हाथ, पैर आदि को काट कर हिंसा की जाती है- तो आत्मा को कष्ट पहुंचता है - वा किसी को यदि मार दिया जाता है तो आत्मा को अपने आश्रय-स्थान के हट जाने से उसी प्रकार का कष्ट होता है - जिस प्रकार किसी व्यक्ति को अपने आश्रयस्थान अथवा घर लुट जाने से होता है।

आत्मा की पृथक् सत्ता को बतलाने के लिए कई अन्य प्रमाण हैं। कोई व्यक्ति किसी चीज को बांई आंख से देखता है। उसी चीज को वह दांई आंख से भी देखता है। तब वह कहता है कि जिस को बांई आंख से देखा था उसी को दांई आंख से देखता हूं। यह प्रत्यभिज्ञा तभी होगी जब कि अतिरिक्त आत्मा की सत्ता स्वीकार करली जाय।

(२) एक इन्द्रिय के विकार से दूसरी इन्द्रिय में विकार आजाता है। कल्पना कीजिए कि आप

---

१४. तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेधः॥
न्याय ३।१।३)

नींबू को देखते हैं और देखते ही आप के मुंह में पानी भर आता है। यह क्यों होता है? जब कि अपने नींबू चखा ही नहीं। ऐसा तभी सम्भव है जब कि आत्मा की सत्ता स्वीकार कर ली जाये। जब आंख नींबू के रूप को देखती तो आत्मा को खबर हो जाती है। तब आत्मा को एकदम स्मरण हो आता है कि अमुक पदार्थ पहले देखा था तो वह भी इसी प्रकार का था और चखने पर उसके रस ने इस प्रकार का आनन्द दिया था। इस ख्याल के आने से मुंह में विकार आ जाता है। इससे सिद्ध होता है कि जिससे नींबू को देखने और रस चखने का स्मरण रखा, वह शरीर आदि से पृथक् आत्मा है।

शरीर आदि से पृथक् आत्मा को सिद्ध करने के बाद आत्मा की नित्यता को दर्शाते हैं। हम देखते हैं कि कोई बच्चा उत्पन्न होता है – उसने अभी तक इस जगत में भय, शोकादि को तो देखा नहीं होता, तब भी वह कभी तो रोता है और कभी हंसता है। इससे पता चलता है कि पूर्व जन्म के संस्कारों का उस पर प्रभाव है। यदि उसने पहले कभी जन्म नहीं लिया होता तो वह कैसे रोता और हंसता। इनसे सिद्ध होता है कि यह आत्मा शरीर-नाश के बाद भी टिका रहता है और अगला जन्म लेते ही हर्ष-भय-शोकादि अनुभव करता है।

गौतम मुनि ने एक जगह आत्मा की नित्यता की सिद्धि करते हुए लिखा है – बच्चा जन्म लेते ही भूख के कारण माता के स्तनों से दूध की इच्छा करता हुआ मुंह मारने लगता है। यह दूध पीने की इच्छा यह जतलाती है कि उसको मालूम है कि माता के स्तनों में दूध है और दूध को पीने से भूख शान्त हो जायेगी। स्तन्यपान की अभिलाषा को बच्चे ने इस जन्म में तो सीखा नहीं। इससे पता चलता है कि इस जन्म से पहले उसका जन्म हो चुका है जहां इसने स्तन्यपान का अभ्यास किया है [१५]। इस पर कोई शंका कर कहते हैं कि स्तन्यपान की अभिलाषा स्वभाव के कारण होती है जिस प्रकार लोहा अपने स्वभाव के कारण चुम्बक की ओर आकर्षित होता है। इसका परिहार भाष्यकार व्यास जी ने किया है। जिसका भाव है कि चुम्बक का स्वभाव यदि आकर्षित करना ही है तो वह मिट्टी के ठेलों को क्यों अपनी तरफ नहीं खींच लेता। इससे पता चलता है कि कोई न कोई कारण अवश्य है जिसकी वजह से चुम्बक और लोहा परस्पर आकर्षित होते हैं। वह कारण कोई भी हो सकता है। इसी तरह बच्चे का माता के स्तनों के प्रति आकर्षिन का भी कोई कारण अवश्य है।

वह कारण है बच्चे की भूख। क्यों कि पिछले जन्म में उसको भूख का लगना और भूख निवृत्ति के लिये उपायों का करना तथा अनेको जन्मों के मां स्तमों के पान का अभ्यास होता। इस सब कारणों से बच्चा उत्पन्न होते ही भूख लगने पर मां के स्तनों के पान के लिये सहज ही प्रवृत हो जाता है।

जब हम संसार को ध्यान से देखते है तो इसमें हम को विषमता ही विषमता दृष्टिगोचर होती है। कोई मनुष्य दुःखी है-कोई जन्म भर रोगों से पीड़ित रहता है। कोई समस्त आयु मृत्युपर्यन्तभजा चङ्गा बना रहता है। इस प्रकार विषमता को देखने से हमें सहज ही पता लग जाता है कि हमारा पिछला जन्म था उसी प्रकार का भोग हम इस जगत में प्राप्त कर रहे हैं।

(क्रमशः)

---

१५. प्रेत्याहाराभ्यासमृतातस्तथाभिलाषम्। न्याय ३।१।२२।

# निश्चलता

आचार्य मुन्शीराम शर्मा "सोम"

जो शिव है, वही शिवत्व का प्रस्तार कर सकता है। वही चलगति, प्रगति के तार को बढ़ा सकता है। जो केन्द्र है, वही बढ़ कर परिधि में व्याप्त हो सकता है। इसी को उलट दें तो कहेंगे कि परिधि के नानाविन्दु समरेखा में भीतर चलते हुए केन्द्र में लीन हो जाते हैं। गति-प्रगति का तार-तार भी इसी प्रकार उलटधार बन कर परमगति-रूप निश्चलता में समा जायेगा। बीज से जैसे वृक्ष का विस्तार होता है, वैसे ही किसी मूल से, किसी केन्द्र से इस चलायमान विश्व का विस्तार हुआ है।

जब तक विस्तार है, तब तक चंचलता है। मूल में पहुंचते ही निश्चलता है। वेद प्रभु के सम्बन्ध में इसीलिए कहता है – तदेजति तन्नैजति; तदन्तरस्य सर्वस्य तदुसर्वस्यास्य बाह्यतः, अनेजदेकं मनसो जवीयो, ध्रुवं ज्योतिः निहितं दृशये कं मनो जविष्ठं पतयत्सु अन्तः, तस्मिन्निदं संच विचैति सर्वम्, स ओतः प्रोतश्च विभूः प्रजासु। ब्रह्म चलता भी है, नहीं भी चलता है, वह सब के भीतर भी है, बाहर भी है, अचल है, ध्रुव है, अनेजत् और अगति है, वह विभू है और प्रजा में ओत-प्रोत है।

जो कुछ ऊपर ब्रह्म के सम्बन्ध में कहा गया है। वह ज्यों का त्यों जीवात्मा के विषय में नहीं कहा जा सकता। सूक्ष्मतम ब्रह्म प्रकृति का विस्तार विश्व में करता हुआ भी उससे निर्लिप्त रहता है। जीवात्मा भी प्राकृत आवरणों का, जो उसे ब्रह्म द्वारा कर्मफल के रूप में प्राप्त हुए हैं, विस्तार करता है, परन्तु उन में ऐसा लिप्त हो जाता है कि उन्हें अपना अभिन्न रूप ही समझने लगता है और परिणामतः दुःखी, परितप्त एवं उच्चावच दशाओं का भोगी बनता है। कच्छप की भांति वह भी अपने को सिकोड़ता और फैलाता है। जागरण में विविध प्रकार की क्रियायें चलती हैं – पढ़ना-लिखना, कार्यालय जाना, खेत या दुकान देखना, राजनीति के प्रपंच में पड़ना, पर शयन में जाते ही सब समाप्त, एकदम चुप्पी, मौन। जागरण और निद्रा के बीच जो स्वप्नावस्था है, वह जागरण की ही भांति चंचल और सुख-दुःखरूपा है। निद्रा ही अभाव का आलम्बन ले पाती है। उसमें मन भी सो जाता है। स्वप्न में यह मन – कहीं की ईंट कहीं का रोड़ा, भानमती ने कुनवा जोड़ा–जागरण के देखे-सुने प्रभावों का ताना-बाना बुनकर उनमें फंसता और व्याकुल होता है। निद्रा को सुषुप्ति भी कहते हैं और मोक्षरूपा भी। जीव इसी निद्रा में बाहर से अपने सम्बन्ध को तोड़ पाता है और थोड़ी देर आनन्द का भागी बन जाता है।

ब्रह्म यदि विश्व के उद्भव, स्थिति, संहार कार्य से निर्लेप रह सकता है, तो क्या जीवात्मा अपनी कृतियों से असंपृक्त नहीं रह सकता ? वेद कहता है– ऐसा हो सकता है। यदि कर्तव्य कर्तव्य के लिए किया जाय तो 'न कर्म लिप्यते नरे' कर्म से जीव अलिप्त रहेगा। गीता ने इसी को बढ़ाकर कहा– कर्मण्येवाधिकारस्ते मा फलेषु कदाचन–तुम्हारा अधिकार कर्म करने में तो है, फलों में किसी प्रकार नहीं। फल की आकांक्षा छोड़ो और कर्म करो। फल के साथ तुम लगाव ही मत रखो। असंपृक्त होकर कार्य करो। कार्य तो करना ही है। बाहर से सम्बन्धित कार्य छोड़ भी दो, परन्तु शरीरयात्रा के लिए तो कुछ न कुछ करना ही पड़ेगा। जब कुछ न कुछ करना ही है तो ऐसे ढंग से करो जिससे उसका प्रभाव तुम पर न पड़े। यह तभी होगा जब

अनासक्त भाव से काम किया जाय। यह अनासक्ति योग नैष्कर्म्य सिद्धि तक अनायास पहुंचा देगा।

वर्णाश्रम व्यवस्था अनासक्ति योग के लिए व्यवस्थित साधन है। श्रमजीवी तथा व्यापारी कर्मफल में अत्यधिक आसक्ति रखते हैं। उन्हें प्राण प्यारे हैं, परिवार प्यारा है, धन से मोह है। वे जो कुछ करते हैं उसमें यह प्रियता और मोह लगे रहते हैं। वे अपने को अनासक्त कर ही नहीं पाते। धन और परिवार तो जहां तहां, प्राणों तक का मोह क्षत्रिय को नहीं होता। राष्ट्ररक्षा जैसे अनेक कार्यों में वह प्राणों को हथेली पर रखे रहता है–वह सीसोदिया, शीश देने वाला कहा जाता है। अनासक्ति वर्णविभाग के तीसरे स्तर पर स्वतः आ जाती है और उसका चरम विकास चतुर्थ स्तर पर होता है जिसे ब्रह्मत्व कहा गया है। आश्रम व्यवस्था में ब्रह्मचारी पढ़ेगा तो अपने विषय का विद्वान बनना चाहेगा ही। गृहस्थ में तो आसक्ति ही आसक्ति है। पत्नी-पुत्र, माता-पिता सभी आसक्ति के बन्धन से बंधे हैं। वानप्रस्थ में इस आसक्ति को दूर करने के लिए तपस्या करनी पड़ती है। संन्यास में पहुंचते ही धन-पुत्र-यश सबकी आसक्ति समाप्त। वर्णों में पुत्र-परिवार प्रियता शूद्र में सबसे अधिक थी। वैश्य में उनके साथ धनप्रियता का प्राधान्य है। क्षत्रिय में इन सबके प्रति अनासक्ति आ जाती है, पर यश की आकांक्षा जाने-अनजाने उसके साथ लगी ही रहती है। ब्राह्मण में इसका भी अभाव हो जाता है। इसीलिए वही संन्यास में जा पाता है, अन्य नहीं।

असंतोष और आसक्ति भाई बहिन हैं। अभिलाषा इनकी माता है और संकल्प पिता है। अभिलाषा की पूर्णता आसक्ति को बढ़ाती है और अपूर्णता असंतोष को। वर्णों में क्षत्रियत्व तक असंतोष रहता है, पर ब्राह्मण का धन सन्तोष है। कहा भी गया है – असंतुष्टा द्विजा नष्टाः संतुष्टाश्च महीभृतः।

ब्रह्मत्व या विप्रत्वमूल है। अतः वही नाना वर्णों में विस्तृत हुआ। उलट धारके क्रम से शूद्र का विकास वैश्य में, वैश्य का क्षत्रिय में तथा क्षत्रिय का ब्राह्मण में हुआ करता है। यह अपने आप होता है। शूद्र धनी बनना चाहेगा, धनी रक्षक बनना चाहेगा और रक्षक ज्ञान की आकांक्षा करेगा। प्रकृति का जो प्रबन्ध दिन और रात्रि या जागरण और शयन में है, वही वर्णाश्रम व्यवस्था में है। नीचे की या विस्तार की चंचलता इस प्रकार उच्चस्तर के अचांचल्य में परिणत होती रहती है। संन्यासी का कोई घर निश्चित नहीं। आज इस घर में भोजन पा रहा है, तो कल किसी दूसरे घर का अतिथि बना हुआ है। आज कानपुर में है तो कल लुधियाना में है। कभी भारत में वेद-ध्वनि कर रहा है तो कभी यूरोप या अमेरिका में। पर, घर स्थिर न होते हुए भी वह बुद्धि से स्थिर है, गृहस्थ न होते हुए भी वह आत्मस्थ है। परिधि में विचरण करता हुआ भी केन्द्रस्थ है। जब तक राज्य में एक भी चोर और मद्यपी है, तब तक क्षत्रिय को संतोष कहां? जब तक देश धन-धान्य से सम्पन्न नहीं हो जाता, जनता भूख की ज्वाला में जलती है, तब तक व्यवसायी, उद्योग-परायण तथा शासकीय अंगों को संतोष कहां? पर ब्राह्मण का ब्रह्मत्व, बड़प्पन सूखी रोटी खाकर भी ज्ञान दान करते रहने में है। वह सन्तोषी है। परिश्रम उसे भी करना पड़ता है। निरुद्यमी होकर हाथ पर हाथ धरे रहना सन्तोष नहीं। सतत पुरुषार्थ करते हुए हानि लाभ में शोक-हर्ष न करने का नाम सन्तोष है। वेद कहता है–संज्ञानामहै मनसा सं चिकित्वा मा युष्महि मनसा दैव्येन। मा घोष उत्स्थुः बहुले विनिर्हते मा इषुः पप्तत्

इन्द्रस्य अहनि आगते । अथर्व ७-४२-२ । हमारा ज्ञान, हमारा सोचना समझना, निश्चय करना मिलकर हो, सम्यक् हो, प्रेमपूर्वक हो, हम दैवी मन से कभी पृथक् न हो, हमारा मन आसुरी विचारों से नितान्त दूर हो । और इस प्रकार दिव्यता में विचरण करते हुए भी यदि रात्रि, अन्धकार, विपत्तियां हमारे ऊपर टूट पड़ें, तो हाहाकार हमारे भीतर न उठे । दैवी विधान समझकर उसे शान्ति से सहन करें और जब दिन निकले, सम्पदा और सुविधा का समय हो, तब उस प्रभु को न भूलें । भोगविलास में डूब कर पथ से च्युत, मार्ग से भ्रष्ट न हो जावें, क्योंकि ऐसा होने पर ही इन्द्र का वज्र गिरता है । अतः कुदिन हो या सुदिन, हमें लाभ-हानि में समान संतोषी रहना चाहिये । यह सोचकर संतोषी ब्राह्मण प्रभु का ही बनकर रहता है, ब्रह्म भाव का कभी परित्याग नहीं करता । उसका जीवन यज्ञमय बन जाता है । यज्ञ ही विष्णु है, यज्ञ ही ब्रह्म है, यज्ञ ही तप है, तप इष्टानिष्ट, लाभ-हानि आदि द्वन्द्वों को सहन करने का ही नाम है । ब्राह्मण इसी तप, इसी संतोष का धनी है ।

यज्ञों में वैश्य साकमेध तथा शुनासीरीय यज्ञ करता है । इन यज्ञों का सम्बन्ध ऋतुओं तथा वृक्ष, वनस्पति, अन्नादि की पुष्टि एवं समृद्धि से है । क्षत्रिय वरुण प्रघास यज्ञ करता है । राजसूय, अश्वमेध आदि यज्ञ इसी के अन्तर्गत हैं । ब्राह्मण वैश्वदेव यज्ञ करता है जिस में आत्मज्ञान से सम्बन्धित सोमयाग, वाजपेय, सौत्रामणि आदि यज्ञों का समावेश है । सोम और ब्राह्मण का सम्बन्ध सभी वैदिक ब्राह्मणों को ज्ञात है ।

ब्रह्मत्व में व्यापकत्व है । विप्र व्यापक ज्ञानी है । वह ब्रह्म है, बड़ा महान् है । न हि ज्ञानेन सदृशं पवित्रमिह विद्यते । इस महत्ता या व्यापकता में केन्द्रस्थता छिपी है । ब्रह्म अचंचल है । ब्राह्मण भी आसक्ति तथा कामना से परे है । ब्राह्मणत्व में प्रवेश करते ही प्रशान्त अवस्था में प्रवेश हो जाता है । ज्ञान तेज है । प्रज्ञा प्रकाश है । विवेक-ज्योति दीपक की चंचल लौ नहीं है, स्थिर मणिज्योति है, यही स्वस्थावस्था है । यहीं आत्म-अवस्थिति होती है । स्वस्ति और शान्ति यहीं पर है ।

मानव अपने विकास में यहां तभी पहुंच पाता है जब उसे ब्रह्म सान्निध्य मिले । ब्राह्मण का शरीर, ब्राह्मी बुद्धि की उपलब्धि असंभव नहीं, तपःसाध्य है, प्रकृति स्वयं उसे उस ओर ले जा रही है । पर जो अपने संकल्प को दृढ़ करके विकास की दिशा में अभ्यास करता है, वह अपने प्रयत्न में अवश्य सफलता पाता है । परिधि का बिन्दु अपने मूलबिन्दु केन्द्र के साथ एक होना चाहता है । प्राणी प्राणी, मानव-मानव भी अपने मूल को पकड़ना चाहता है । हम सब चंचलता में, जीवन प्रवाह में अशान्ति का अनुभव करते हुए अचंचल और शान्त होना चाहते हैं । यह महत्वाकांक्षा, अपने व्यक्तित्व को यज्ञमय बनाने से पूर्ण होती है । यज्ञमय बनना ही ब्रह्ममय बनना है । ब्राह्मणत्व के भी चार स्तर हैं – होता, अध्वर्यु, उद्गाता और ब्रह्मा । होता ज्ञानी है, अध्वर्यु कर्म-परायण है, उद्गाता भक्त है और ब्रह्मा अथर्वा निष्कम्प, निश्चल या शान्त है । कोरा ज्ञानी होना अपूर्णता है । ज्ञान के साथ आचार, कर्मनिष्ठता आवश्यक है । ज्ञान और कर्म का अवसान भक्तिभावना में होता है । ज्ञान, कर्म और भक्ति-तीनों मिलकर ही अथर्व या निश्चल अवस्था में पहुंचा सकते हैं । निश्चल अवस्था के अद्वैत या एकत्व का प्रतिपादन करती हुई श्रुति कहती है– यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति । सर्वभूतेषु चात्मानं ततो न विचिकित्सति । यस्मिन् त्सर्वाणि भूतानि आत्मैवाभूद्विजानतः ।

तत्र को मोहः ? कः शोकः ? एकत्वमनुपश्यतः । यजु. ४०–६,७। ब्राह्मण सर्वत्र आत्मा को देखता है। उसके लिए सभी प्राणी अपने हैं। वह संदेह से ऊपर है, एकत्व का दर्शन कर रहा है। उसे न विगत पर शोक है, न अनागत का मोह।

ब्राह्मण वर्णों का मूल है। बृहदारण्यक उपनिषद् ४–११ उसे क्षत्रयोनि कहती है, पर वस्तुतः वह सभी की योनि है। मानवता का विकास भी यही सिद्ध करता है। ब्राह्मणत्व में प्रवेश किए बिना शान्ति नहीं, आनन्द नहीं। सभी अपने मूल को प्राप्त करना चाहते हैं। ब्राह्मण भी ब्रह्म का है। जब तक वह ब्रह्म को प्राप्त न कर ले, तब तक चैन कहां, विश्राम कहां ? ब्राह्मण का शरीर पाकर यदि उसे क्षुद्र कामनाओं ने नष्ट कर दिया, तो पूर्व जन्मों की समस्त साधना पर पानी फिर गया। अतः इस शरीर में भी तप, तप ही नहीं कृच्छ्र तप, कठोर साधना करनी होगी, जिससे शरीर छोड़ने पर उस अनन्त, प्रशान्त, निश्चल, अथर्व, योनियों की योनि, अपने मूल को हम प्राप्त कर सकें। पूर्णता, निष्कम्पता, गतियों की गति, यही परम गति है। यही ध्यातव्य है। यही प्राप्तव्य है। अग्ने नय सुपथा सुगा नः कर्त सुपथा स्वस्तये। स्वस्ति पंथामनुचरेम।

---

# स्तन-कैन्सर

श्री वैद्य रामसिंह, गोहिल

हमारे ३५ साल के अनुभव के बाद हमने शरीर के खास-खास १७ हिस्सों पर होने वाले ५० किस्म के कैंसर को पा लिया है।

सभी कैंसरों में स्तन-कैंसर का इलाज बहुत सरल है, जैसा हमारा अनुभव है।

कैंसर के खास तीन वर्ग हैं; (१) सूजन वाला कैंसर, (२) ग्रंथि वाला कैंसर, (३) सड़न वाला कैंसर।

कैंसर का सही इलाज "पंचकर्म" ही है, फिर भी बहुत से इलाज करने पड़ते हैं। हर प्रकार के कैंसर के इलाज अलग-अलग होते हैं। 'स्तन कैंसर' आयुर्वेद का स्तन विद्रधि है। विद्रधि शरीर में नौ स्थानों में होता है, (१) नाभि में (२) बस्ति में, (३) प्लीहा में, (४) क्लोम (दाहिना फेफड़ा) में, (५) हृदय में (६) वृक्क में, (७) जंघामूल में, (८) गुदा में, (९) स्तन में।

स्तन कैंसर महिलाओं को ही होता है। खास तौर पर कंवारी–ब्रह्मचारिणी, विधवाओं को बहुत कम होता है। बच्चों वाली महिलाओं को खास यह कैंसर होता है।

स्तन कैंसर होने का कारण बहुत मामूली है। दुग्धवाहिनी में अवरोध होने से; और चोट लग जाने से स्तनकैंसर शुरू होजाता है।

गर्भाशय और स्तन्याशय महिलाओं को होता है। गर्भाशय और स्तन्याशय का बड़ा निकट का

सम्बन्ध है। जब सगर्भा अवस्था में गर्भाशय बढ़ता जाता है, तब स्तनों की भी वृद्धि होती रहती है। प्रसव हो जाने के पश्चात् स्तन से दूध निकलना शुरू हो जाता है। बहुत से स्तन कैंसर प्रसूता अवस्था में शुरू हुए देखे गये हैं।

यह ६ ठिकानों पर होने वाले कैंसर में स्तन कैंसर अगर कच्चा न मिट सका तो उसको पकाकर मिटा सकते हैं, क्योंकि यह बाहर फूटने वाला कैंसर है। दूसरे आठ प्रकार के सभी कैंसर—आंत्रविद्रधि है, जो शरीर के अन्दर फूटने वाले हैं, जो अन्दर फूटता है वह असाध्य हो जाता है।

इस प्रकार के कैंसर की संख्या (१) वातज (२) पित्तज (३) कफज (४) त्रिदोषज (५) रक्तज (६) क्षतज—६ प्रकार की है।

चमड़ी, मांस, अस्थि, स्नायु, रक्त और कण्डरा के आधार से यह कैंसर बहुत वेदना युक्त, लम्बा, गोल और चीट्टियों के घर जैसा शोथ अन्दर और बाहर होता है।

रुक्ष भोजन, विदाही भोजन, वासी अन्न का भोजन, टेढ़ी शय्या, शरीर की उल्टी चेष्टा कराने से और रक्त विकृति करने वाले आहार विहार से स्तन कैंसर होता है।

शरीर के वात पित्त कफ बिगड़ कर धातुओं को बिगाड़ना शुरू कर देते हैं, और रस, रक्त मांस और मेद धातु बिगड़ जाती है; तब स्तन, कैंसर असाध्य हो जाता है।

शस्त्रक्रिया—आपरेशन और लाइट (सेक) कैंसर का सही इलाज नहीं है। विद्रधि को कच्चा काटने से फिर से शुरू होजाता है। लाईट से अगर बिखरा गया तो भी फिर से निकलता है, क्योंकि यह कैंसर आगे जाकर दोषों और धातुओं में प्रवेश करता है। इससे सारे शरीर में व्यापक हो जाता है। जो रोग व्यापक है; इसका इलाज भी व्यापक करना पड़ता है। स्थानिक इलाज से व्यापक रोग दूर नहीं हो सकता है।

हर किस्म के कैंसर में पथ्य का बहुत ख्याल करना पड़ता है दही, खटाई, मिर्च, उड़द, मिठाई, तैल, में पकाई हुई चीजें, मूंगफली, ठण्डी बर्फीली चीजें, मोसम्बी, ईख का स्वरस, मांस, अण्डे, शराब—धूम्रपान, चूना, तम्बाखू आदि चीजें बन्द करनी पड़ती हैं।

दोष और धातुएं बिगड़ने से जब यह कैंसर पककर फूट जाता है, तब फूलगोभी की तरह इसकी व्रणविकृति हो जाती है और असह्य बदबू आने लगती है। इस रोग में शरीर शुद्धि—"पंचकर्म" कराकर; अगर दोष और धातुएं शुद्ध नहीं की जाती तो यह विकृत व्रण कैंसर कभी भी अच्छा नहीं होता।

हर प्रकार के कैंसर में जठराग्नि मंद पड़ जाता है। इसका भी पूरा ख्याल रखना पड़ता है। पथ्य भोजन से जठराग्नि का जलन होता है। अगर रोगी आहार विहार की थोड़ी सी गलती करेगा तो परिणाम बहुत बुरा आयेगा।

स्तन कैंसर शुरू होते ही निम्न इलाज शुरू करें। सहिजन की छाल (त्वचा), पीपल वृक्ष की छाल, कंचनार की छाल, वरणा की छाल, रोहेडा की छाल, हलदी, अजमोदा, दारूहल्दी, पुनर्नवा इन सब औषधियों को समभाग लेकर काढ़ा बनाकर १ माशा बोल और १ माशा शिलाजीत मिलाकर सुबह शाम पीना शुरू करें, फिर कैंसर के तज्ज्ञ वैद्य से पंचकर्म और सही इलाज शुरू करें।

दुनियां भर में कैंसर का एकमात्र सफल इलाज "पंचकर्म" है।

—०—

# सामवेद-हिन्दी-पद्यानुवाद

## (उत्तरार्चिक)

### द्वितीय प्रपाठक का द्वितीय अर्ध

श्री विद्यानिधि शास्त्री

(पीयूषवर्ष छन्द)

(८३०)

एते असृग्रमिन्दवस्तिरः पवित्रमाशवः ।
विश्वान्यभि सौभगा ॥

ये सोम इन्द्र हैं बने, रसधार छोड़ते ।
दिल को पवित्र वृत्तियों में शीघ्र मोड़ते ॥
इनमें समग्र विश्व का सौभाग्य है भरा ।
टेढ़ी कुचाल छोड़ हो जीवन हरा भरा ॥

(८३१)

विघ्नन्तो दुरिता पुरु सुगा तोकाय वाजिनः ।
त्मना कृण्वन्तो अर्वतः ॥

सब विघ्न पाप ताप दुर्गुण दोष ये हरें ।
सुन्दर सुगम समृद्धि सुख सन्तान में भरें ॥
बलवेगयुक्त अश्व को निज शक्ति से करें ।
आनन्दसिन्धु इन्दु ऐसा नाम भी धरें ॥

(८३२)

कृण्वन्तो वरिवो गवेऽभ्यर्षन्ति सुष्टुतिम् ।
इडामस्मभ्यं संयतम् ॥

ये गाय बैल सांड का कल्याण भी करें ।
ऊंचे प्रशस्त संस्तवों की ओर ही झरें ॥
इनको भजें सभी मनुज जिनसे हृदय खिलें ।
जल भूमि वाणियां हमें संयत सुखद मिलें ॥

(८३३)

राजा मेधाभिरीयते पवमानो मनावधि ।
अन्तरिक्षेण यातवे ॥

राजा बना मनुष्य में पवमान देवता ।
अत्यन्त शुद्ध बुद्धि से उसका लगे पता ॥
मन-अन्तरिक्ष में वही है सैर कर रहा ।
अनुभूत पूत भाव भी सर्वत्र भर रहा ॥

(८३४)

आ नः सोम सहो जुवो रूपं न वर्चसे भर ।
सुष्वाणो देववीतये ॥

हे सोम देव ! आप हमको दीप्ति से भरें ।
दृढ़ शक्ति वेग रूप सम रसधार भी झरें ॥
हम लोग दिव्य हों इसी से आप को भजें ।
अभिषव करें, समस्त खोटी वासना तजें ॥

(८३५)

आ न इन्दो शतग्विनं गवां पोषं स्वश्व्यम् ।
वहा भगत्तिमूतये ॥

हे इन्दु! सैंकड़ों हमें तुम गाय अश्व दो ।
उत्कृष्ट इष्ट भाग्य दो, सन्तुष्टि पुष्टि दो ॥
रक्षार्थ सौख्य संपदा भरपूर दीजिए ।
जीवन समस्त मस्तियों से पूर्ण कीजिए ॥

(८३६)

तं त्वा नृम्णानि बिभ्रतं सधस्थेषु महो दिवः ।
चारुं सुकृत्ययेमहे ॥

द्युलोक मध्य में रहो तुम देव! हो बड़े ।
दो स्थान साथ ही मुझे जो स्थिर नजर पड़े ॥

सम्पत्ति सब धरो तुम्हीं यह यश बना रहे ।
हम चारु कृत्य से प्रभो! तुम को मना रहे ।।

(८३७)

संवृक्तधृष्णुमुक्थ्यं महामहिव्रतं मदम् ।
शतं पुरो रुरुक्षणिम् ।।

जो स्तुत्य नित्य धृष्टतावर्जित पवित्र है ।
भगवान् महेन्द्र है व्रती मदयुक्त मित्र है ।।
सौ शत्रु के नगर वही बेरोक रोकता ।
उस देव को भला यहां है कौन टोकता ।।

(८३८)

अतस्त्वा रयिरभ्ययद् राजानं सुक्रतो दिवः ।
सुपर्णो अव्यथी भरत् ।।

स्वर्लोक में सुकर्म के प्रेरक महान् प्रभो!
अधिराज आपको सभी हैं प्राप्त धन विभो ।।
योगी व्यथारहित सुपर्णोपम बली व्रती ।
सेवें तुम्हें इसीलिए वे सब बनें कृती ।।

(८३९)

अधा हिन्वान इन्द्रियं ज्यायो महित्वमानशे ।
अभिष्टिकृद् विचर्षणिः ।।

हे देव! पूर्ण इन्द्रियों की पुष्टि तुम करो ।
इन्द्रस्वरूप जीव में निज शक्तियां भरो ।।
भारी महत्त्व से भरे विस्तार को धरो ।
द्रष्टा अभीष्टकृत् बने सब पाप भय हरो ।।

(८४०)

विश्वस्मा इत् स्वर्दृशे साधारणं रजस्तुरम् ।
गोपामृतस्य विर्भरत् ।।

सब को प्रकृष्ट मोक्षसुख के दर्शनार्थ ही ।
विचरो समानरूप से सब में तुम्हीं सही ।।
रक्षक सुयज्ञ के तुम्हीं हो लोक में रमे ।
गतिशील पक्षिसम सभी योगी भजें तुम्हें ।।

(८४१)

इषे पवस्व धारया मृज्यमानो मनीषिभिः ।
इन्दो रुचाभि गा इहि ।।

हे इन्द्र! अन्नधान्यहित मधुधार से झरो ।
विद्वान् मनीषिवृन्द से शोधित विभा भरो ।।
निर्भ्रान्ति शान्त कान्तियुक्त सब इन्द्रियां करो ।
गौ भूमि वाक् पवित्रता का ध्यान भी धरो ।।

(८४२)

पुनानो वरिवस्कृध्यूर्जं जनाय गिर्वणः ।
हरे सृजान आशिरम् ।।

गीर्वाणिपुण्य वाणियों से सेव्य हे विभो !
सुख शान्ति पुष्टि दीजिए निजभक्त को प्रभो ।।
भर दो पवित्रता तुम्हीं हर दो दुरित हरे !
दिल दुग्ध पक्व भोज्य से कर दो हरे भरे ।।

(८४३)

पुनानो देववीतय इन्द्रस्य याहि निष्कृतम् ।
द्युतानो वाजिभिर्हितः ।।

हे इन्दु! इन्द्रजीव का जीवन पवित्र हो ।
दिव्यत्व बोध के लिए सुन्दर चरित्र हो ।।
शोभन विभूतियों सहित द्योतन दिखाइये ।
आ कर हृदय निखारिये संस्कृत बनाइये ।।

(८४४)

अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा ।
हव्यवाड् जुह्वास्यः ।।

हे देव! अग्नि अग्नि से मिल कर समिद्ध हो ।
तुम भी युवा कवि स्वयं जग में प्रसिद्ध हो ।।
रक्षक गृहस्थ के तुम्हीं वाहक सुहव्य के ।
मुखतुल्य आपके चमस हैं भव्य गव्य के ।।

(८४५)

यस्त्वामग्ने हविष्पतिर्दूतं देव सपर्यति ।
तस्य स्म प्राविता भव ।।

# विषय-सूची



**गुरुकुल-पत्रिका का वार्षिक मूल्य —**

देश में - ४ रुपये, विदेश में — ७ रुपये, एक प्रति - ४० पसे

पृष्ठ ४९६ से आगे--

हिन्दी में भाषण न दे सकने के कारण क्षमा प्रार्थना कर मान्य श्रममन्त्री जी ने कहा कि मैं गुरुकुल में श्रममन्त्री की हैसियत से नहीं अपितु गुरुकुल का प्रशंसक व प्रेमी होने के नाते आया हूं। स्वामी दयानन्द जी व स्वामी श्रद्धानन्द जी का लक्ष्य एक ही था। वे समाज में वर्गभेद नहीं चाहते थे। गुरुकुल संस्था उस को मिटाने का एक प्रतीक है। मानव जीवन में जो उदात्त है, सुन्दर है, सरल है गुरुकुल उसका पोषक है अत: गुरुकुल जैसी संस्थाओं का निर्माण हो। समाजवाद का उद्देश्य व्यक्तियों को आर्थिक दृष्टि से उन्नत करने के साथ२ चरित्र को भी ऊंचा उठाना है। अन्त में मान्य अतिथि ने कहा "मेरा सौभाग्य है कि मैं गुरुकुल में आया और यहां के विद्वान कुलपति जी से विचार कर गुरुकुल की उन्नति और आदर्शों का परिचय प्राप्त कर सका। मैं समस्त कुलवासियों का आभारी हूं।'

आंग्लभाषा विभाग के अध्यक्ष प्रो० श्रीसदाशिव जी भगत ने मान्य अतिथि के अंग्रेजी भाषण को साथ ही साथ हिन्दी में अनुवाद कर सुनाया।

## शोक समाचार

हमें यह समाचार देते हुए महान् हार्दिक दुःख है कि गुरुकुल कांगड़ी विश्वविद्यालय के सुयोग्य स्नातक श्री युधिष्ठिर विद्यालंकार का बम्बई में २ अगस्त १९७४ को अचानक हृदयगतिरुद्ध हो जाने से स्वर्गवास हो गया। वे महान् कर्मठव्यक्ति थे। सन् १९३४ में गुरुकुल से स्नातक बनने के बाद उन्होंने पत्रकारिता का व्यवसाय अपनाया। कुछ काल पश्चात् स्वतन्त्र व्यवसाय के रूप में बम्बई में फिलम इण्डस्ट्रीज में खूब नाम कमाया। उनकी अभी बहुत अधिक आयु भी नहीं हुई थी। कुलवासियों की ओर से हम प्रभु से याचना करते हैं कि वह दिवंगत आत्मा की सद्गति तथा परिजनों को सुख शान्ति व सान्त्वना प्रदान करें।

# नव कुलपति अभिनन्दन-समारोह (२-७-१९७४)

आर्य प्रतिनिधि सभा के प्रधान स्वामी इन्द्रवेश जी नव कुलपति डा० सत्यकेतु विद्यालंकार का अभिनन्दन करते हुए

गुरुकुल कांगड़ी विश्वविद्यालय के नव कुलपति डा० सत्यकेतु विद्यालंकार का स्वागत करते हुए स्वामी अग्निवेश जी

# दीक्षान्त-समारोह (१२-४-७४)

नव स्नातकों को आशीर्वाद देते हुए गुरुकुल कांगड़ी विश्वविद्यालय के लब्धप्रतिष्ठ पुराने स्नातक डा० सत्यकेतु विद्यालंकार । दायीं ओर चोला पहने हुए गुरुकुल कांगड़ी विश्वविद्यालय के कुलसचिव डा० गंगाराम जी तथा आचार्य रामनाथ जी वेदालंकार

# दीक्षान्त-समारोह ( १२-४-७४ )

मान्य अभ्यागत श्री प्रकाशवीर शास्त्री तथा स्वामी ब्रह्ममुनि जी के साथ कुलाधिपति श्री स्वामी इन्द्रवेश जी, आर्यप्रतिनिधि सभा के उपप्रधान श्री पृथ्वीसिंह जी आजाद और श्री रामगोपाल जी शालवाले तथा मन्त्री श्री वीरेन्द्र जी एवं अन्य अधिकारी गण

## दीक्षान्त-समारोह
( १२-४-७४ )

गुरुकुल कांगड़ी विश्वविद्यालय के कुलाधिपति स्वामी इन्द्रवेश जी ( बायें से ३रे ) दीक्षान्तभाषणकर्त्ता स्वामी ब्रह्ममुनि जी (बायें से ४थे), श्री वीरेन्द्र जी (बायें से २रे), श्री मरवाहा जी तथा अन्य अधिकारीगण नवस्नातकों के साथ

# गुरुकुल-पत्रिका

[ गुरुकुलकांगड़ीविश्वविद्यालयस्य मासिक पत्रिका ]

श्रावण २०३१, अगस्त १९७४, वर्षम्-२६, अङ्कः १२, पूर्णाङ्काः ३०८


**ओ३म् सं यं स्तुभोऽवनयो न यन्ति समुद्रं न स्रवतो रोधचक्राः ।**
**स विद्वां उभयं चष्टे अन्तर्बृहस्पतिस्तर आपश्च गृध्रः ॥७॥**

(अवनयः न) जिस प्रकार अङ्गुलियां किसी पदार्थ को थामने के लिये (सं यन्ति) मिल कर जाती हैं और (न) जिस प्रकार (रोधचक्राः) अवरोध तथा चक्र=भंवर वाली (स्रवतः) नदियां मिलकर (समुद्रं) समुद्र में गिरती हैं उसी प्रकार (स्तुभः) स्तुभनात्मक ये स्तुतियां स्तुत्य देव को मिलकर थामती हैं। ऐसे स्तुभनामक स्तुति वाले व्यक्ति को (विद्वान् बृहस्पतिः) विद्वान् बृहस्पति आचार्य (गृध्रः) संसार सागर से पार पहुंचाने की इच्छा वाला होकर (अन्तः) अपने अन्दर हृदय गुहा में बैठ शिष्य के (तरः आपश्च) तरणसाधन नौका तथा व्यापक जल (उभयं) दोनों को (चष्टे) देख लेता है।

रोधचक्राः--रोधचक्राः नदी नाम। निघ. १।१३

रोधाश्चक्राणि च यासु ताः नद्यः--स्वामी दयानन्द

ऐसी नदियां जिनमें बीच २ में अवरोध बने होते हैं तथा चक्र अर्थात् भंवर बनती रहती हैं। यहां स्तुति प्रसंग में ये दोनों भाव दृष्टिगोचर होते हैं। स्तुति प्रवाह के मार्ग में भी अनेकों अवरोध तथा गुमराह करने वाली भंवरें आ जाती हैं। सम्भवतः ये योगज सिद्धियों के रूप में भी हो सकती हैं। जिनके प्रभाव में आकर एक योगी व विज्ञानी पुरुष सीधे मार्ग से भटक जाता है या वहीं रुक जाता है। दूसरी दृष्टि से शिष्य के लिये भी गुरु के प्रति भक्ति व स्तुति में कई अवरोध व गुमराहें पैदा हो जाती हैं, परन्तु विद्वान् बृहस्पति शिष्य के अन्दर बैठकर उसकी सामर्थ्य व उसके तैरने योग्य वासनादि जल प्रवाह को सम्यक् प्रकार से देखलेता है। इसका अन्य भी तात्पर्य हो सकता है।

अवनयः--अवनयोऽङ्गुलयो भवन्त्यवन्ति कर्माणि। नि. ३।९। अवनि अर्थात् अङ्गुलि का उदाहरण यह दर्शाने के लिये है कि जिस प्रकार अङ्गुलियों की मिलकर पकड़ होती है, उसी प्रकार भिन्न २ स्तुतियों की पकड़ दृढ़ होनी चाहिये, सबका ध्येय व पकड़ एक ही हो।

---

# वेदसंख्या विचारः

प्रा० श्री भद्रसेन, साधु आश्रम, होशियारपुर

केषाञ्चिदियं धारणा यत्पूर्वमेक एव वेद आसीत्, वेदव्यासेन लोककल्याणाय विषयानुसारं वेदस्य चतुर्विधो विभागो विहितः । प्रमाणमत्र वेदं तावद् एकं सन्तमतिबृहत्त्वाद् दुरध्येयं दुर्ज्ञेयमनेक-शाखाभेदेन समाम्नासिषुः सुखग्रहणाय व्यासेन समाम्नातवन्तः । नि. १,२० दुर्गभाष्ये ।

पूर्वं भगवता व्यासेन जगदुपकारार्थमेकीभूय-स्थिताः वेदा व्यस्ताः शाखाश्च परिच्छिन्नाः तै. सं. भूमिकायां भट्टभास्करः ।

तत्रादौ ब्रह्मपरम्परया प्राप्तं वेदं वेदव्यासो मन्दमतीन् मनुष्यान् विचिन्त्य तत् कृपया चतुर्धा व्यस्य ऋग्यजुःसामाथर्वाख्यांश्च चतुरो वेदान् पैलवैशम्पायनजैमिनिसुमन्तुभ्यः क्रमात्-उपदिदेश-महीधरः—यजुर्भाष्ये ।

वेदान् विव्यास यस्मात् स तेन व्यास इति स्मृतः ।
अवतीर्णो महाभागो वेदं चक्रे चतुर्विधम् ।।
ब्रह्मणा चोदितो व्यासो वेदान् व्यस्तुं प्रचक्रमे ।

महाभारते, पुराणेष्वपि मिलति भावनैषा । अपरपक्षेण तु—वेदव्यासतः पूर्वमेव विभक्तानां चतुर्णां वेदानां साहित्ये चर्चोपलभ्यते । पुनः कथं व्यासेन विभागः कृतः । वेदेष्वेव चतुर्णां नामानि प्राप्नुवन्ति । तद्यथा—

१—तस्माद्यज्ञात्सर्वहुतः ऋग्यजुः ।
२—यस्मादृचोऽपातक्षन्, अथर्व० ।
३—यस्मिन् वेदा निहिता विश्वरूपाः, अ०४,३५,६. अत्र वेदाः बहुवचनम्, पुनः कथमेक एवेति ।
४—एवं वा अरेऽस्य महतो भूतस्य, शतपथ, बृह०-उप०, मै. उप. ।
५—चत्वारि शृंगा-इति वेदा वा एतदुक्ता क. ब्रा. ।
६—चत्वारो हीमे वेदाः—काठक ।
७—यो ब्रह्माणं विदधाति पूर्वं । यो वै वेदांश्च प्रहिणोति-श्वेता-उप० ।
८—तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदश्च, मुण्डकोपनिषत् ।
९—ऋग्वेदं भगवोऽध्येमि, यजुर्वेदं सामवेदमथर्वाणं चतुर्थम्, छान्दोग्य ।
१०—अग्निवायुरविभ्यस्तु त्रयं ब्रह्म मनुस्मृति १, २३ ।
११—चत्वारि शृंगा-। चत्वारो वेदाः नि० १३, ७ महाभाष्येऽपि-एषैव व्याख्या ।

तत्र यदुक्तं चातुर्वेद्यं चत्वारो वेदविज्ञाता भवन्ति । तत्र ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वश्चेति चरणव्यूह ।

१२—रामायणे हनूमान् महोदयस्य परिचयावसरे- न ऋग्वेदविनीतस्य न यजुर्वेदधारिणः । इति वर्णितम् ।
१३—ऋचो बह्वृच मुख्यैश्च प्रेर्यमाणाः पदक्रमैः ।
शुश्राव मनुजव्याघ्रो-तेषु इह कर्मसु ।। ३१
अथर्ववेदप्रवराः-पंच याज्ञिकाः सम्मताः ।
संहितामीरयन्ति स्म पदक्रमयुतां तु ते ।।
महा. आदिपर्व ६४, ३२ ।

शाकुन्तलोपाख्यानानुसारं दुष्यन्तसमये एषा स्थितिः ।

१४–वेदाः–महा. शल्य ४१, ४; वन २६, ३६ ।

१५–वेदैश्चतुर्भिः द्रोण ५१, १२ ।

१६–राजश्चाथर्ववेदेन शा. ७३, ७ ।

महाभारतस्याध्ययनेन विज्ञायते, यत् श्रीव्यास-महोदयस्य पितृपितामहप्रभृतिभिश्चत्वारो वेदाः पठिताः । यदि तैः चतुर्णामध्ययनं विहितं तर्हि व्यासः कथं तान् व्यभजत् ।

**उपसंहारः**–सम्भवतो वेदव्यासकृतविभागस्यायमभिप्रायः स्यात्, यद् व्यासशिष्यप्रशिष्यैः पाठसंग्रहं विधाय शाखाब्राह्मणानि विरचितानि । तदभिप्रायबोधकमेवेदं मतं प्रतीयते । तथा च वेदान् अनेकधा कर्तुं यदि ते रुचितं प्रभो ! महा. शा० ३३६, ३ । एवमेव-वेदद्रुमश्च यं प्राप्य सशाखः समपद्यत । वायु० पु० १, ४५ ।।

आभ्यां प्रमाणाभ्यामपि–एतदेव सिध्यति यद् व्यास एव वेदीयशाखाब्राह्मणग्रन्थानाम् मूलप्रणेता । अत एव वेदविभागकर्तृरूपेण स्मर्यते ।

## वेदा त्रयश्चत्वारो वा––

**प्रथमपक्षः**–साहित्ये प्रायः त्रयाणामेव नाम श्रूयते । यथा-त्रयं ब्रह्म सनातनम्, मनुस्मृति १,२३ । तेभ्यस्तप्तेभ्यस्त्रयो वेदाअजायन्त, शतपथ । तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे । तस्माद्यजुः । वेदैरशून्यैस्त्रिभिरेति सूर्यः तै. ब्रा. । ऋषयस्त्रयिविदो विदुः ऋचः सामानि यजूंषि, तै. ब्रा. १,२,१,२६, । यद्वै यज्ञस्य साम्ना यजुषा क्रियते, शिथिलं तत् । यद् ऋचा तद्दृढम् तै. ६,५,१०,३ त्रिभिर्वेदैर्विधीयते– । तथा देवता-भाषा-भाव-छन्दसामपि नूतनत्वं प्राप्यते ।

अतो वक्तुं शक्यते, अथर्ववेदो नूतनः, बहुकालानन्तरं चतुर्थवेदरूपेण स्थानं प्राप्तवान् ।

**द्वितीयः पक्षः**–यस्मादृचोऽपातक्षन्–अथर्व । अस्य महतो भूतस्य–शतपथ । तत्रापरा ऋग्वेदो–मुण्डक । रामायण-महाभारतयोरध्ययनेनापि चतुर्णां नामानि प्राप्नुवन्ति । ऋग्यजुः सामाथर्वणञ्च चत्वारो वेदाः, नृसिंह उप. १, २ ।

गोपथब्राह्मणे (१,२,११६; १,३,२,) चतुर्णां नामानि मिलन्ति ।

बहुषु स्थलेषु त्रयाणामेव नामानि कथमिति कथनस्य समाधानं कुर्वन् श्री सायणाचार्यः अथर्वभूमिकायां प्राह–व्याहृतीनां तिस्रत्वात् क्वचित् त्रयाणामेव चर्चा । कुत्रचित् पूर्वाह्णादि कालाभिप्रायेण, तत्र कालदृष्ट्या, त्रयाणामेव चर्चा । कुत्रचिद् वेदगतमन्त्राभिप्रायेण त्रैविध्यम् । मीमांसादर्शने अस्मिन् विषये विशिष्टा चर्चा वर्तते । तच्चोदकेषु मन्त्राख्या ३२ । तेषां ऋग् यत्रार्थवशेन पादव्यवस्था ३५ । गीतिषु सामाख्या ३६ । शेषे यजुः शब्दः मी. २,१,३७ । अर्थात् त्रिविधमन्त्रदृष्ट्या त्रैविध्यं स्वीक्रियते । ज्ञान-कर्म-उपासनाविषयभेदतस्त्रैविध्यम् । वेदास्तु चत्वार एव त्रयाणां नामानि तु विशेषदिशैव ।

# " विश्वप्रकृतिः कुरुते निरन्तरं भगवते यज्ञम् "

आशा, संस्कृतविभागः, श्री अरविन्दाश्रमः, पाण्डिचेरी

चराचरविश्वं ननु प्रकृतेः यज्ञशाला यत्र सा निरन्तरं यज्ञे व्यापृता । श्रीअरविन्दो यदस्मान् प्रतिपादयति "सम्पूर्णं जीवनं खलु योगः" इति तस्य साक्षात्प्रमाणस्वरूपा सा अस्माकं सम्मुखम् । उच्चादुच्चतरं गच्छन्ती निष्कम्पा, देदीप्यमाना पवित्रनीरवाग्निशिखा इव भगवन्तमभीप्सन्ती सा चराचरं तदेव शिक्षयति । प्रकृतेः दर्शनेन कथं कृत्स्ना सृष्टिः भगवल्लीलाँ संकीर्तयति इत्यपि स्पष्टमेव ।

अवसन्नायां यामिन्यामागतायां च उषायां पक्षिणां कूजनेन प्रकृतिः चराचरं जागरयति । तस्मिन् समये विहङ्गानां ध्वनिः वेदमन्त्र इव कर्णकुहरे प्रविशति । चतुर्दिग्भ्योऽमृतवर्षां कुर्वती सा आद्योऽपि चिरनूतनः प्रणवनाद इव उद्घोष्यमाणः प्रतीयते । तस्यां मङ्गलवेलायां भगवत्प्रेमपरिप्लाविता धरित्री आनन्दगीतं गायति, शाश्वती परमा शान्तिः सर्वत्र राजते, सुखदः शीतलश्च समीरः नवजीवनस्य सञ्चारं करोति, तृणगुल्मानि नर्तं नर्तमानन्दसमारोहे आह्लादेन हिन्दोलायन्ते, प्रकाशाभिमुखं गच्छन्त्यः वृक्षश्रेण्योऽनागतप्रकाशस्य स्वागतसज्जां कुर्वन्ति । सागरोर्मिमालाः उत्थायोत्थाय भगवतेऽर्घ्यं समर्पयन्ति उपकूलं सङ्प्लुप्य च भगवच्चरणे विधौते कुर्वन्ति । प्रभातागमने सर्वाणि सुमानि पुष्प्यन्ति । भगवत्सौन्दर्यमभिव्यञ्जयन्ति तानि सर्वभावेन भगवत्समर्पितानि, यतो हि भगवच्चरणारविन्दे स्वात्मसमर्पणमेव तेषां लक्ष्यम् । भगवदभिव्यक्तिरेव तेषामस्तित्वस्यैकमात्रं कारणं ननु । स्पष्टमेव यत् प्रकृतिमाताखिलविश्वं भगवन्निमित्तं यज्ञायाहूय कथयति, "निबिडान्धकारः समाप्तः । हे धरित्रि ! प्रकाशाभिमुखी जागृहि ।" अचिरमेव सूर्योदयेन वसुन्धरारुणरागेण रञ्जिता भवति । तपनोऽभीप्सायाः जागरितमुदाहरणम् । कुसुमेषु स्वर्गोपमाः विमलोज्ज्वलशुभ्रनीहारबिन्दवः मातृप्रार्थनां स्मारयन्ति । "बिन्दुशः स्वीयसर्वशक्तिमयप्रेम्णः प्राणदायिनीमूर्ध्वर्गामिग्निशिखां सिञ्चसि त्वम् । यदास्माकमज्ञानान्धकाराच्छन्नजगति इमे शाश्वतज्योतिर्बिन्दवः सुमधुरं पतन्ति तदा प्रतीयते यत् कृष्णव्योम्नः धरित्र्यामेकैकशः हिरण्मयानि नक्षत्राणि वर्षन्ति ।"

व्योम्नः श्वेतकृष्णौ वर्णौ अस्मान् श्रीअरविन्दस्य श्रीमातुश्च दिव्यप्रकाशमण्डलं स्मारयतः । प्रभातागमने प्रकृतिमाता सर्वानाह्वयति कार्याय, यतो हि श्रीमाता कथयति—कार्यं देहस्य परमा प्रार्थना ननु । मध्याह्ने आदित्यस्य प्रचण्डकिरणाः अस्मान् भगवतः प्रखरदिव्यप्रकाशपुञ्जं स्मारयन्ति । प्रदोषकालेऽस्तमयन् दिनकरः विभिन्नवर्णैः स्वमधुररवतरागैः गगनं रञ्जयित्वा सृष्टौ वर्णवैचित्र्यं च निदर्शयति । तत्परमचिरं सुधाकरः स्वकिरणजालैः निबिडान्धकारग्रस्तधरणीं स्वज्योतिषा उद्भासयति, वर्षति च स्वचन्द्रिकां भगवत्कृपारूपेण, सर्वानन्धकारनिमज्जितान् जडजङ्गमान् भगवदभिमुखान् करोति । तारकापुञ्जाः अपि कथयन्ति-'सर्वे भगवतः अंशभूताः स्फुलिङ्गाः ननु ।' सर्वान् च स्वलक्ष्यं स्मारयन्ति ।

सम्पूर्णा सृष्टिः निरन्तरं भगवतोऽद्भुतकथां कीर्तयति । रात्रौ वात्सल्यमयी प्रकृतिमाता विश्वचराचरं स्वक्रोडे स्वापयति गायति च नीरवतायाः परमसङ्गीतम् ।

इत्थं निरन्तरं सृष्ट्याः आदिकालात् प्रभातात् रात्रिपर्यन्तं प्रतिमुहूर्तं सम्पूर्णा विश्वप्रकृतिः भगवद्गाथां निगदन्ती परमकृतज्ञतायां भगवन्मुखी यज्ञं करोति ।

जून १९७४ मासाङ्कादग्रे--

# अथ प्रकाशाभ्युदयो नाम

श्री डा० मंगलदेव शास्त्री

## एकादश उच्छ्वासः

### प्रत्यवमर्शः

१९२४ ई० वर्षादारभ्य १९६८ ई० वर्षपर्यन्तम्, अर्थात् प्रायेण पञ्चचत्वारिंशतं वर्षाणि यावत्, कतिचिद्वर्षाणामवान्तरकालं विहाय, समासीत् साक्षात्संबन्धः प्रथमं काशिकराजकीयसंस्कृतमहाविद्यालयेन तदनन्तरं तस्यैव रूपान्तरेण वाराणसेयसंस्कृतविश्वविद्यालयेन । सुदीर्घेऽस्मिन् काले तयोः संबन्धेन मम कीदृशं कियद्वा कार्यमिति संक्षेपेण पुरस्ताद् व्याख्यातम् ।

स्पष्टं मम जीवनस्यातिमहान् भागोऽस्मिन् कार्ये व्यतीतः । सततमहोरात्रस्य श्रमेण तत्संपादितम् । एकमात्रं लक्ष्यमासीत्—संस्कृतस्य संस्कृतज्ञानां तद्द्वारा भारतीयसंस्कृतेश्च व्यापकदृष्ट्या विश्वमुखी समुन्नतिः ।

1. **अद्य यावत् पी-एच०डी०उपाध्यर्थं स्वीकृतानां शोधनिबन्धानां विषया एते (१) ब्रह्मसूत्रीय वैष्णवभाष्याणामालोचनापुरःसरं तुलनात्मकमध्ययनम् । (२) पुराणान्तर्गत वैदिक विषयाणामालोचनात्मकमध्ययनम् । (३) विष्णुपुराणान्तर्गतानां धार्मिकसामाजिकैतिहासिक विषयाणामालोचनात्मकमध्ययनम् । (४) शाङ्करवेदान्ते बौद्धदर्शनस्य प्रभावः । (५) महाभारतस्य पुराणानां चाधारेण हिन्दूतीर्थानामालोचनात्मकमध्ययनम् ।**

अद्य यावद् या कापि प्रगतिस्तस्यां दिशि दृष्टिपथमायाति सर्वस्या अपि तस्याः सूत्रपातः सोत्साहमनेनैव जनेन कृत आसीदिति नाविदितं तदितिहासविदाम् ।

तेषु दिनेषु संकीर्णमतीन् प्रगतेर्विरोधिनः प्रति मदीयमुद्बोधनमासीत्—'अद्यत्वे भवद्भिर्यस्याः प्रगतेर्विरोधः 'मया मोहान्धेन प्रहृतमिदमात्मन्यकरुणम्' इत्यनुसारं क्रियते, भविष्ये नूनं स एव प्रगतेः पन्था भवद्भिरप्यनुसर्तव्यः' इति ।

उदाहरणार्थम्, राजनीतिः, आगमशास्त्रम्, जैन बौद्धदर्शने, अर्थानुसन्धानपूर्वकं वेदाध्ययनम्, तुलनात्मकदृष्ट्या दर्शनशास्त्राध्ययनम्, स्त्रीणां कृते विशेषाध्ययनक्रमः, तुलनात्मकं भाषाविज्ञानम्, ऐतिहासिकदृष्ट्या संवलिता भारतीयसंस्कृतिः, प्राचीनाकरग्रन्थानामन्येषां च विलुप्तप्रायाणां विशिष्टग्रन्थानामुद्धारः—इत्यादि विषयेषु प्रथमं तु जनस्यास्य दिग्दर्शनं नैवानुसरणीयमित्येव पक्षः साग्रहं समर्थितस्तैस्तैः संकीर्णमतिभिः कार्यकर्णधारैः !

परं सामयिकीरावश्यकता अनुरुध्य तत्तद्विषयाणां कालक्रमेण क्रियमाणः स्वीकारोऽपि नाद्य यावत्सर्वात्मनोदारदृष्टिमनुसरति !

**अत्र विषये ममैतन्निश्चितं मतम्—**

**अद्यत्वे प्रगत्युन्मुखताया उदारबुद्धेश्च सर्वतः प्रथममपेक्षा संस्कृतज्ञेषु, न केवलं राष्ट्रस्य कल्या-**

**णार्थमेव, किन्तु तेषामेव सर्वक्षेत्रेषु समुन्नत्यर्थमपि । 'ज्ञानस्य सीमाया बन्धनं ज्ञानस्य विकासश्चेति विप्रतिषिद्धम् !'**

**'सूर्यप्रकाशावरोधः पादपानामिव, विद्याप्रकाशावरोधो बुद्धीनां हितावहो न भवति !'**

## उदारबुद्धेर्व्याख्यानम्

उदारबुद्धेः सर्वतः प्रथममपेक्षा संस्कृतज्ञेष्विति पुरस्तादुक्तम् । तत्र तस्या उदारबुद्धेर्वस्तुतः किं स्वरूपमिति चेच्छ्रूयताम्——

**तत्तज्जातिवर्गप्रान्तसंप्रदायादिगतसंकुचितभावनाभ्य उत्थाय राष्ट्रियभावना, अखिल भारतीय भावना, भारतीय संस्कृतेर्भावना इत्याद्युदात्तभावनाभिः संस्कृता परिष्कृता च बुद्धिरेव वस्तुत उदारबुद्धिरित्यभिख्यां भजते ।**

**उदारबुद्धिश्च पुनः प्रगत्युन्मुखतायामेव पूर्णतः सफलतां समश्नुते ।**

**तत्रैतौ श्लोकौ भवतः—**

**सत्यासत्यपरीक्षायां तत्परा आग्रहं विना ।**
**उदारमतयो नूनं प्रगतेः पक्षपातिनः ।।१।।**
**पश्चाद्दृष्ट्या प्रवर्तन्ते संकीर्णमतयो नराः ।**
**रूढिमार्गेण गच्छन्तः प्रगतेस्ते विरोधिनः ।२।**

उदात्तवैदिकभावनानां वातावरणे बाल्यादेव लालितः वर्धितश्च, प्राचीनार्षसंस्कृतेरादर्शाननुसरति गुरुकुले राष्ट्रियभावनाभवने प्रायेण सर्वश्रेष्ठे पाश्चात्य विश्वविद्यालये चान्तेवासित्वगौरवमनुभूयाहं स्वभावादेवोक्तलक्षणाया उदारबुद्धेः पक्षपाती अभवम् । अत एव यत्र कुत्रापि वसन् निश्छद्मभावेन पूर्वोक्तानां राष्ट्रियभावनादीनां संपत्त्यै सततं प्रयत्नपर आसम् ।

तदत्र कतिचिदुदाहरणानामुल्लेख एव पर्याप्तः ।

तथा च, विदेशयात्रायाः पूर्वमेव लाला लाजपतरायादिराष्ट्रनेतॄणां प्रभावेण दलितवर्गस्योद्धारार्थं मया नैकरूपेण प्रयत्नः प्रारभ्यत ।

विदेशप्रवासेऽपि उक्तविषये मम तीव्रा रुचिरन्ववर्त्तत, अत एव तत्र दलितजनताया उद्धारार्थं क्रिश्चियनधर्मानुयायिभिरनुस्रियमाणायाः कार्यपद्धतेरध्ययनार्थं मम विशेषप्रयत्न आसीत् । किं च, विदेशेषु राजामहेन्द्रप्रतापः, मानवेन्द्रनाथरायः, अवनीमुकर्जी इत्यादिभिः प्रसिद्धक्रान्तिकारिभिः स्वसंपर्कस्य स्थापने मम राष्ट्रहितप्रेरणैव एकमात्रं कारणमासीत् ।

स्वदेशे प्रत्यागमनानन्तरं तु सततं राष्ट्रहितभावनया प्रगत्युन्मुखोदारबुद्ध्या च प्रेरितेन मया, प्रतिक्रियावादिनामत्यन्तं घोरविरोधेऽपि, यद्यत्संपादितं संपाद्यते च तत्प्रायेण विवृतं पुरस्तात् ।

किञ्च, राजकीयसंस्कृतमहाविद्यालयस्य प्रधानाचार्यत्वकाले, ततः पूर्वं च, ब्रिटिशशासनस्य क्रोधादिभाजनेभ्यो राष्ट्रियकार्यपरेभ्यश्छात्रेभ्योऽन्येभ्यश्च विविधरूपेण मया प्रदत्तस्य संरक्षणस्य समाश्रयस्य च ये प्रसङ्गास्तेषामत्र वर्णनेनालम् ।

किं बहुना, १९४२वर्षे बिहारप्रान्तीय कारागारादात्मानं गूढोपायेनोन्मोच्य स्वतन्त्रस्य सत इतस्ततो गूढं विचरतः श्री जयप्रकाशनारायणस्यापि दिनद्वयमस्मत्कुटुम्बेन सह निवासः, एतादृशा एवान्येऽपि प्रसङ्गाः—सर्वमेतदेकान्तभावेन ममोक्तप्रवृत्तीनां पक्षपातमेव द्योतयति ।

**राजकीयसंस्कृतमहाविद्यालये छात्राणां प्रवेशे जन्मजातिगतभावना संकीर्णसांप्रदायिकभावना वा बाधिका न भवेत्, केवलं योग्यतायाः प्रश्न एव**

**विचारणीयो भवेदित्येतदर्थं मया सततं प्रयतितम् । अन्ततो गत्वा द्वौ शासनादेशावपि** (g. o no. A-4017/xv–910-47, dated May 12, 1947 तथा G." O." no. O-1422/II-B-55-1948, daned April 14, 1948) **उक्तार्थपुष्टिकरौ प्राप्तौ आस्ताम् । तदनुसारमुक्तमहाविद्यालये प्रवेशावसरे, न केवलं छात्राणां जन्मजातेः प्रश्न एव नोत्थापनीय इत्यादिष्टमासीत्, किन्तु प्रवेशपुस्तके कस्यापिच्छात्रस्य जातेरुल्लेखोऽपि न करणीय इत्यप्यादिष्टमासीत् ।**

एतादृशैरेव विचारैः प्रेरितेन मया तत्तज्जातिविचारमुपेक्ष्यैव केवलं योग्यताया आधारेणैवच्छात्राणां प्रवेशः प्रचालितोऽभूत् । तत्कारणादेव स्वामिरामानन्द ( हरिजनजातीयः सः ) शास्त्री ( अद्यत्वे संसत्सदस्यः ) स्वामि सर्वानन्द शास्त्री (हरिजनजातीयः), अन्येऽपि च तत्सदृशाः अस्माकं महाविद्यालयस्य स्नातका दृष्टिपथमायान्ति ।

**तदेतन्नूनं मम सात्त्विकगर्वस्य प्रसन्नतायाश्च विषयः !**

**एवमेव महाविद्यालयीयच्छात्रेषु विशेषतः, संस्कृतजगति च सामान्यतः, परम्परागतसंकीर्णबुद्धेरुन्मूलनार्थं प्रगतिभावनायाश्च विकासार्थं मम नैके प्रयत्ना आसन् । अलमत्र तेषां परिगणनया ।**

तेषामेवैष सुपरिणामो यदस्माकं नैके प्राचीनच्छात्रा अनुसन्धानोपाधिभिर्युक्ता अथच वैदेशिक विश्वविद्यालयीयशिक्षादीक्षिता दृष्टिपथमागच्छन्ति ।

## तत्र खेदावहोऽन्तरायः

परमत्यन्तखेदस्यायं विषयो यदुक्त महाविद्यालयाद्मयावकाशग्रहणानन्तरं यैर्महोदयैः प्रधानाचार्यकार्यभारो गृहीतः प्रायेण ते तत्तत्क्षेत्रे प्रगतिभावनाया उन्मूलनार्थं कृतसंकल्पा इवासन् ।

**भारतवर्षेण नूनं स्वराज्यं लब्धम् । परं राजकीयसंस्कृतमहाविद्यालये तत्तज्जातिवर्गसंप्रदायगताः संकीर्णभावना अहमहमिकया भूयोऽपि लब्धप्रसरा आसन् । छात्राणां प्रवेशे उदारताया भावना तावद्दूर आस्ताम्, अध्यापकानामपि नियुक्तौ चिरपरम्परया प्राप्तोदारभावना प्रायेणास्तंगता ।**

**संकीर्णभावनामूलाया अस्या दुष्प्रवृत्तेः प्रभावः स्वभावतो वाराणसेयसंस्कृतविश्वविद्यालयमपि ग्रस्तवान् । सत्यमेतत् 'कार्यं निदानाद्धि गुणानधीते' इति । स च प्रभावो भूतावेशइव तं विश्वविद्यालयमद्यापि न मुञ्चति । एतत्कारणादेव तत्रत्योपकुलपतिकृतेआत्मरक्षार्थम् आरक्षकबलस्य** (of the Police Force) **आवश्यकता प्रायेण जायते । उच्चपदस्थाधिकारिणामपि न केवलं प्रतिष्ठाभङ्गस्य, किन्तु प्राणरक्षाया अपि, गम्भीरप्रश्नो यदा कदा समुत्पद्यते ।**

तदस्या विश्वविद्यालयीय दुःस्थितेः किं मौलिकं कारणमिति जिज्ञासायाः समाधानं तु विश्वविद्यालयस्य प्रारम्भकाल एवोच्चशिक्षाधिकारिणां संकुचितमनोवृत्तेरनु संधान एव निहितमित्यन्यत्र विस्तरः !

**शास्त्रेषु 'विद्या ह वै ब्राह्मणमाजगाम गोपायमा शेवधिष्टेऽहमस्मि ।' (निरुक्ते २।४), 'एतस्मिन्नार्यावर्ते निवासे ये ब्राह्मणाः कुम्भीधान्या अलोलुपा अगृह्यमाणकारणाः किञ्चिदन्तरेण कस्याश्चिद् विद्यायाः पारगास्तत्रभवन्तः शिष्टाः'** ( व्याकरणमहाभाष्ये ६।३।१०९ ) इत्यादिप्रकारेण येषामध्यापकानां महिमा शतशो गीयते, यादृशां हि महात्मनां दर्शनं भारते प्रायेण पूर्वं सुलभमासीत्,

साम्प्रतमपि च दिष्ट्या बहवस्तादृशाः (=तपः-स्वाध्यायनिरताः शान्तादान्ता मनीषिणः) वाराणसीमलंकुर्वन्ति (तदत्रास्मिन्नेव ग्रन्थे द्वितीयउच्छ्वासेऽग्रत्वेऽपि संस्कृतविद्वत्सूपलभ्यमानानां विशिष्टगुणानां वर्णनं द्रष्टव्यम्), तेष्वेवाद्यत्वे भारतस्य दौर्भाग्येण कश्चिन्नूतन एव प्रकारोऽपि दृष्टिपथमागच्छन् सखेदं सर्वानाश्चर्यचकितान् विदधाति !

**तस्मिन् प्रकारे हि—**

**कर्तव्यभावनाह्रासो मायाचारप्रवीणता ।**
**कूटकापट्यवृत्तिश्च कस्य दुःखाय नो भवेत् ! ॥१॥**

तदेतदतीव खेदावहं भारतीयसंस्कृतेर्गीर्वाणवाण्या वा उद्धारायकृतसंकल्पानाम् ।

**एतादृशे प्राणशोषणवातावरणे विश्वविद्यालये 'असतो मा सद्गमय, तमसो मा ज्योतिर्गमय' (बृहदारण्यकोपनिषदि १।३।२८), 'अश्रद्धामनृतेऽदधाच्छ्रद्धां सत्ये प्रजापतिः' ( यजुर्वेद १९।७७ ) इत्यादि श्रुतिप्रतिपादितस्य सत्यानुसंधानस्य वा विद्यायाः समुन्नतेश्च वानुकूलोऽवसर उपस्थितो भवितुमर्हतीत्येव तावदसंभवं प्रतीयते ।**

अत एव तत्रत्येनोपकुलपतिना २०।८।१९६७ ई० दिनाङ्के कार्यकारिण्यां परिषदि **"अनुसन्धानकार्ये विशिष्टविद्वत्तापूर्णप्रकाशनकार्ये वा लब्धप्रतिष्ठा योग्या एव विद्वांसो व्याख्यातृपदेषु प्राध्यापकपदेषु च विश्वविद्यालये नियोज्याः' इत्यर्थको मदीयः प्रस्तावः साग्रहं प्रस्तुतोऽपि पूर्णतयोपेक्षित एव ।**

विश्वविद्यालयस्य प्रारम्भकालादेव प्राध्यापकानां नियुक्तावस्था दृष्टेरुपेक्षा तद्भविष्यमन्धकारमयं कृतवती ! तत्रत्याः केचित् प्राध्यापका अद्य यावत्कथमनुसन्धानकार्यस्य मार्गप्रदर्शनं कृतवन्तः कुर्वन्ति वा? तदेतच्चिन्तयत एव रोमाञ्चो जायते ! तदेतत्तावदेकं मुख्यं तत्रत्यवैचित्र्यस्य निदर्शनम् !

## अन्यच्च रहस्यात्मकं निदर्शनम्

अत्र स्मृतिपथमायात्यपरं रहस्यात्मकं निदर्शनम् । सामयिकमिति नात्र तदुल्लेखनमसाम्प्रतम् ।

१९६६ वर्षे **ताशकन्दगमनस्य** किञ्चित्कालात्प्राग् देहलीराजधान्यां प्रधानमन्त्रिभिः स्व० श्री लालबहादुरशास्त्रिभिर्मया साक्षात्कारो जातः । काशीविद्यापीठे स्थितिकाले स मम शिष्य आसीदिति पूर्वमवोचाम । अस्माकं राजकीय संस्कृत महाविद्यालयीय प्रथमदीक्षान्तमहोत्सवेऽपि स निमन्त्रणेनोपस्थित आसीत् । मम प्रधानाचार्यत्वेन नियुक्तेरवसरे जातेन महता संघर्षेणापि सपरिचित आसीत्। प्रधानाचार्यत्वेन मम नियुक्तेरनन्तरं या अभूतपूर्वा प्रगतिर्महाविद्यालयस्याजायत, सापि नूनं तस्य श्रुतिपथमागताभूत् ।

१९६४ वर्षे ( २६।१२।१९६४ दिनाङ्के ) स्वकीय प्रधानमन्त्रित्वकाले वाराणसेय संस्कृतविश्वविद्यालयस्य दीक्षान्तभाषणप्रदानाय स आमन्त्रितोऽभूत् । तस्य भाषणस्य स्मृतिर्नवीनैवासीत् तस्य मानसे । तद् भाषणं विश्वविद्यालयात् प्रेषितसूचनाया अनुसारेणैव लिखितं मुद्रितं चासीत् ।

तस्मिन् भाषणे **डा० जे० म्यौर, डा० जे० आर० बैलेन्टाइन, डा० जी० थीबो, श्री आर० टी० एच० ग्रिफिथ**प्रभृतिपाश्चात्यानामपि प्रधानाचार्याणां नाम्नामुल्लेखे सत्यपि मदीयनाम्न उल्लेखाभावेन स खिन्नइव मां प्रति किञ्चिदाश्चर्यं प्रकटीकृतवान् ।

मया तु सस्मितं केवलमेतावदेवोक्तम्—**नैवात्र किञ्चिदाश्चर्यम्** । एष खलु तत्रत्यः **'शीलसमुदाचारः'** !

शतशः शासनीयपत्रादिषु संस्कृतमहाविद्यालयीयविशिष्टप्रगतिसम्बन्धे मम नाम्न उल्लेखे सत्यपि वाराणसेय संस्कृतविश्वविद्यालयेन संबद्धानां **केषांचिद्** 'महानुभावानाम् एष' एव प्रयत्नो दृश्यते यत्तस्य विद्यालयस्य विश्वविद्यालयस्य वा इतिहासान्मम नामोल्लेखोऽपि विलुप्येत इति । अत्र विषये निदर्शनानां बाहुल्यमिति नाविदितं विपश्चिताम् । तदेतदतीव मे मनोरञ्जनस्य विषयः !

एतादृशस्थलेषु स्वकीय आदर्शस्तु एवं प्रतिपादितोऽस्माभिरेवान्यत्र—

**'कृतघ्नतापिशाच्या वा मित्रद्रोहस्य रक्षसः ।**
**स्वार्थस्य दुष्टवृत्तेर्वा घतित्राणाय यन्मतम् ॥**
**चित्तस्य तादृशं स्वास्थ्यं सोऽयं मे निचिरव्ययः ।'**
(जीवनज्योतिः ११।४२, ४६)

## मम जीवनस्य भविष्यत्कार्यक्रमः

**तदेवं संस्कृतविश्वविद्यालये तत्प्रगतेर्वर्तमानस्य स्वरूपस्य प्रवृत्तीनां च दृष्ट्या तद्विषयकस्वजीवनस्वप्नानां पूर्णरूपेण साफल्यमदृष्ट्वापि नैवाहं भग्नमनोरथो भवामि । नूनं स समय आगमिष्यति यदा स विश्वविद्यालयः सगर्वं सोल्लासं च मत्प्रदर्शितमार्गेणैव क्रमशो विकासमेष्यति । नूनं 'नान्यः पन्था विद्यतेऽयनाय'**

स्वजीवनस्य भविष्यकार्यक्रमसंबन्धे तु नास्ति मम किञ्चिन्नूतनं वक्तव्यम् ।

२५।७।१९६१ दिनांके स्वकीयोपकुलपतित्वकाले संस्कृतविश्वविद्यालयीय सत्रारम्भभाषणे१ मया स्पष्टमुक्तमासीत्—उपकुलपतित्वं मया स्वीकृतं केवलं विश्वविद्यालयस्य, **स्वाभिमतादर्शानां दृष्ट्या, हितकरणार्थम्** । यदि तत्र बाधोपतिष्ठते, तर्हि विद्यते ममान्यो निरत्ययो मार्गः कार्यस्य । **स च भारतीय संस्कृतेर्विकासस्य सप्तसु अष्टसु वा खण्डेषु धारारूपेण व्याख्यानरूपः** । उपकुलपतिपदान्निरतिशयेनात्यधिकं महत्त्वं तस्य कार्यस्य । अवश्यं चिरचिरकालस्थायि तद् भविष्यति ! इति ।

स एवाद्यत्वे मम जीवनस्य मुख्यो भविष्यकार्यक्रमः । 'यद् भूतं यच्च भाव्यम्' सर्वं तद्विस्मृत्य साम्प्रतं तावदेकान्तभावेन, स्थविरतानुषङ्गिणि शरीरास्वास्थ्ये सत्यपि, प्रधानतस्तदनुसन्धानकार्यमेव कर्तुमभिलषामि ।

स्वजीवनस्यादर्शानां विषये यत्प्रधानतो वक्तव्यं तत् खलु अस्यात्मवृत्तान्तीय प्रकरणस्य प्रारम्भ एव स्पष्टरूपेणोक्तम् ।

**साम्प्रतमेव प्रकाशितः 'असाम्प्रदायिक दृष्ट्या विश्वमानवीय दृष्ट्या च जीवनदर्शनस्य प्रतिपादकः' 'जीवनज्योतिः' अथवा 'वैदिक गीताञ्जलिः' इत्याख्यो ग्रन्थ एकप्रकारेण मम जीवनप्रगतेरेव जीवनादर्शानां वा व्याख्यारूप इति पूर्वमवोचाम ।**

नैव तत्प्रतिपादनं पुनरुक्तिमपेक्षते । तथापि ततः कश्चिदंशोऽत्र समुद्ध्रियते, **यो वै मम जीवनयात्रायाः प्रकाशस्तम्भरूपः**—

( **क्रमशः** )

---

१—अस्मिन्नेव ग्रन्थे इतः पूर्वं तत्प्रकाशितं विद्यते ।

# अग्निमन्त्रमाला

(श्री अरबिन्दप्रणीत 'Hymns to the Mystic Fire' ग्रन्थस्य धारावाहिकोऽनुवादः, अनुवादकोपज्ञेन भावार्थेन तदुपज्ञनानाविधटिप्पणीभिश्च संवलितः)

अनु० श्री जगन्नाथो वेदालंकारः

**स नः पावक दीदिवोऽग्ने देवां इहा वह ।**
**उप यज्ञं हविश्च नः ॥१०॥**

१ सः २ नः ३ पावक ४ दीदि-वः ५ अग्ने ६ देवान् ७ इह ८ आ ९ वह १० उप ११ यज्ञम् १२ हविः १३ च १४ नः ।

4 O Shining 5 flame 1,3 thou who purifiest 7 hither 8,9 bear (2 for us) 6 the Gods 10 to 14 our 12 offerings 13 and 10 to 14 our 11 sacrifice.

३ हे परिशोधक ! ४ महातेजोमय ५ अग्ने! १ पूर्वकीर्तितः प्रसिद्धस्त्वम् २ अस्मभ्यम् ७ अत्र अन्तर्यजनवेदौ १४ अस्माकम् ११ अन्तर्यागम् १२ पूर्वोक्तहव्यसमूहम् १३ च प्रति, तयोः १० समीपे, ६ देवान् ८,९ प्रापय ।

**भावार्थः**

हे देदीप्यमान अग्ने, हे परमपावक, इह अस्माकं यज्ञं हव्यं च प्रति देवानाहर ।

**व्याकरणम्**

४ दीदि-वः । द्र. १ १२.५[2] ।

**स नः स्तवान आ भर गायत्रेण नवीयसा ।**
**रयिं वीरवतीमिषम् ॥११॥**

१ सः २ नः ३ स्तवानः ४ आ ५ भर ६ गायत्रेण ७ नवीयसा ८ रयिम् ९ वीर-वतीम् १० इषम् ॥

1 Thou 3 adored 7 by our fresh 6 Gayatri rhythms 4.5 bring 2 for us 8 the felicity and 10 force 9 full of hero's strength.

७ नवतरेण ६ गायत्रीछन्दोबद्धस्तोत्रेण ३ स्तूयमानः १ पूर्वमभिगीतः त्वम् २ अस्मभ्यम् ८ आनन्दनिधिं ९ वीरत्वपरिपूर्णां, शौर्यवीर्योपेतां १० प्रेरयित्रीं शक्तिं च ४,५ आहर ।

**भावार्थः**

हे अग्ने ! अस्माकं नव्यतरेण गायत्रस्तोत्रेण संस्तुतस्त्वमस्मभ्यमानन्दैश्वर्यं पराक्रमशालिनीं शक्तिं चाहर ।

**व्याकरणम्**

३ स्तवानः । ष्टुञ् स्तुतौ इत्यस्मात् कर्मणि लटः शानचि छान्दसं रूपम् ।

५ भर । हृ धातो र्लोण्मध्यमैकवचनम् । हस्य भश्छान्दसः ।

६ गायत्रेण । गायत्र्या इदं गायत्रं तेन ।

९ वीर-वतीम् । वीरशब्देन वीरत्वं लक्ष्यते । वीरः अर्थात् वीरत्वं वीर्यं वाऽस्यामस्तीति ताम् ।

१० इषम् । एषणं गतिः प्रेरणं वा । तदेव इट् । इष गतौ इत्यस्माद् दैवादिकात् स्त्रियां भावे क्विप् । तदन्तात् 'इष्' शब्दात् द्वितीयैकवचनम् । अन्तरर्थेऽयं शब्दः प्रेरणबलस्य प्रकाशशक्तेर्वा वाचकः ।

**अग्ने शुक्रेण शोचिषा विश्वाभिर्देवहूतिभिः ।**
**इमं स्तोमं जुषस्व नः । १२॥**

१अग्ने २शुक्रेण ३ शोचिषा ४विश्वाभिः ५ देवहूति-भिः ६ इमम् ७ स्तोमम् ८ जुषस्व ९ नः ॥

1 O fire 3 with thy lustres 2 white and 4 all 5 thy divine hymns that summon the Gods 8 come and accept 6 this 7 hymn 9 that we affirm.

१ हे तपोदेव अग्ने ! स्वात्मनः २ शुभ्र-श्वेतेन तेजसा, ३ स्वीयशुभ्रप्रभाभिः स्वकीयैः ४ सर्वैरपि ५ देवाह्वायकै र्दिव्यसूक्तैश्च युक्तस्त्वं तैः सहात्रागत्य ९ अस्माकम् ६ इदं स्तोत्रं ८ प्रीत्या सेवस्व ।

भावार्थः

हे अग्ने ! निजसमुज्ज्वलज्योतिःप्रभाभिः देवाह्वानकरीभिर्दिव्यस्तुतिभिश्च सह त्वमत्र समेहि, स्वीकुरु चास्माकमिदमस्माभिर्गीयमानं स्तोत्रम् ।

व्याकरणम्

५ देवहूति-भिः । देवानां हूतयः आह्वानानि यासु स्तुतिषु ताभिः ।

(क्रमशः)

---

# गुरुकुल पत्रिका के नियम

१ 'गुरुकुल पत्रिका' मासिक है । यह प्रत्येक अंग्रेजी मास की १२, १३ तारीख को प्रकाशित होती है ।

२ यह आधी संस्कृत में तथा आधी हिन्दी में होती है । इस में कवर समेत प्रायः ४४ पृष्ठ होते हैं । वर्ष में एक या दो विशेषांक लगभग १२०-१५० पृष्ठों तक के होते हैं ।

३ इसमें प्रमुख रूप से लेख वैदिक-साहित्य, भारतीय-संस्कृति-सम्बन्धी होते हैं ।

४ वार्षिक मूल्य देश में ४) और विदेश में ७) है, जो धनादेश (मनीआर्डर) द्वारा ही "**सम्पादक : गुरुकुल-पत्रिका**" के नाम से आना चाहिए । ग्राहक कभी भी बन सकते हैं ।

५ लेख छोटे, सारगर्भित तथा मौलिक होने चाहिएं । शुद्ध, सुपाठ्या तथा एक ओर लिखे होने चाहिएं । लेख, कविता तथा समालोचनार्थ पुस्तकें (२ प्रतियां), परिवर्तनार्थ पत्र-पत्रिकाएं सम्पादक के नाम भेजनी चाहियें ।

६ किसी लेख अथवा कविता आदि के प्रकाशित करने या न करने, घटाने-बढ़ाने या संशोधन करने का अधिकार सम्पादक को है । बिना डाक खर्च भेजे अप्रकाशित कविता वा लेख लौटाये न जा सकेंगे ।

## सम्पादक—गुरुकुल पत्रिका, डाकघर : गुरुकुल कांगड़ी

**जिला : सहारनपुर ( उ० प्र० )**

# ध्वनितत्त्वम्

डा० रामनारायणदासः

तत्र वीरो नाम विविधमीरयति विश्ववैचित्र्यमिति भगवान् शब्दराशिरिति भट्टारकः। तदुक्तं चिद्गगनचन्द्रिकायाम्--

ईरणेन विविधेन वीरतां यो यदक्षरयणः प्रपद्यते। वीरसम्बन्धी धर्मो वीर्यमित्युच्यते। मन्त्राणां वीर्यमिति मन्त्रवीर्यम्। तच्च वीर्यं पूर्णाहङ्कार एव। यदि त्वमात्मानं देहमात्रं मन्यसे, तर्हि तव देहाधिकृतं यावद् विद्यते, तावदेव अधिकर्तुं समर्थः। तदधिकं चेद् वाञ्छसि तर्हि द्वण्डभीतिः। तदुक्तं भट्टगङ्गाधरमित्रैः--

**अपूर्णम्मन्यता व्याधिः कार्पण्यैकनिदानभूः।**
**क्लेशावहो जुगुप्सश्च सर्वधर्मबहिष्कृतः॥**
**आनन्दकणभिक्षार्थं शब्दस्पर्शादिपक्वणे।**
**अटत्यविरतं येन तद्दारिद्र्यं विदुर्बुधाः॥**

यदि च त्वम् अकारहकारप्रत्याहारात्मा गर्भीकृताशेषविश्वसमग्रशास्त्रप्रसरप्रथमाङ्कुरः चित्स्वरूपः पूर्णाहन्तारूपो यो भगवान् शब्दराशिः तदात्मना स्वात्मानं परामृशसि तर्हि यावद्तद् अधिकृतम्, तावद् अनुशास्तुं समर्थः। चित्स्वरूपस्य अहमित्यस्य मन्त्रवीर्यत्वमुक्तं श्रीसंवित्स्तोत्रे--

**आदिमान्तगृहीतवर्णाराश्यात्मिकाहमिति या स्वतः प्रथा।**
**मन्त्रवीर्यमिति साधितागमैस्तन्मयो गुरुरसि त्वमम्बिके॥**

अस्येदं तात्पर्यम्--प्रकाशविमर्शात्मका अकारहकारौ मध्यवर्तिनां लौकिकवर्णमालाघटकानां समेषां वर्णानां बोधकौ अथ च स्वात्मनोरपि। यथा पाणिनीयशास्त्रे 'आदिरन्त्येन सहेता' इति सूत्रेण निष्पन्ना अणादिप्रत्याहाराः अकारादिध्वनीनामथ च मध्यपतितवर्णानां बोधकास्तथा अत्रापि ब्रह्मनिष्ठस्पन्दभूतौ अकारहकारावपि। भेदस्तावद् उभयत्र अयमस्ति यत्पाणिनीयव्याकरणशास्त्रे अणादिसंज्ञाभिः, अन्त्यस्य णकारादे ग्रहणं न क्रियते, इत्संज्ञकत्वात्। किन्त्वहमिति इत्यत्र हकारोऽपि 'अह' इति प्रत्याहारेण गृह्यते। ब्रह्मनिष्ठप्रकाशविमर्शयोः समरसीभूते 'अहम्' इत्यत्र प्रत्याहृताः स्वरव्यञ्जनात्मकाः सर्वे ध्वनयो भगवतः शक्तिस्वरूपाः।

परमात्मनि अकारककारादि स्वरव्यञ्जनवाच्यानामशेषशक्तीनामभेदरूपतया समन्वयो विद्यते। अत एव निष्कले ब्रह्मणि पूर्णाहन्ता स्वाभाविको धर्मः। निखिलं स्वरव्यञ्जनात्मकं सार्थकं निरर्थकञ्च ध्वनिम्, अथ च निखिलं विश्वं मयूराण्डरसे पुच्छपादाङ्गानीव यद्वा वटवीजे शाखापल्लवादीनि इव अभेदरूपतया गर्भीकृत्य परात्मनि परावागात्मकं चित्स्वरूपं 'अहम्' इति स्फुरति। उक्तञ्च योगिनी हृदयस्य मन्त्र सङ्केत निरूपणे--

**अतोऽकारहकाराभ्यामहमित्यपृथक्तया।**
**प्रपञ्च शिवशक्तिभ्यां क्रोडीकृत्य प्रकाशते[1]॥**

परावागात्मकमिदं स्फुरणं '**स्वरूपज्योतिरेवान्तः परावागनपायिनी**' इत्युक्त्या स्वतः प्रकाशस्वरूपा। पश्यन्त्यादिकं वैखरीपर्यन्तञ्च उत्तरोत्तरं क्रमशः प्रकाशयति। विमर्शस्वभावा विगलितोपरागा निरोधकाभावाद् अनिशं स्फुरद् रूपतया च स्वरसवाहिनीयमहन्ता चेतनाचेतनात्मकस्य जगतः देशकालादिभेदकानाञ्च स्वात्मन्यसम्भवाद् अद्वितीयः सन् आगमेषु अहमित्यभिहितः। स एव

---

१ नियत्यषोडशिका पट १२ श्लोक ४४तमस्य शिवानन्दकृत ऋजुविमर्शिनी व्याख्यायामयं श्लोकः समुद्धृतः।

अनाहत महाध्वनिभट्टारकः। नित्यं स्फुरद्रूपतया तद्विशिष्टतया च परब्रह्मापि तद्रूपमेवेति परावागात्मिका पूर्णाहन्ता च तदभिन्ना।

एतत्सर्वम् अद्वैतवादिनां मतानुसारेण ध्वनितत्त्वं व्याख्यातम्। द्वैतवादिनां मतानुसारेण तु परावागात्मनो ध्वनेः विन्दोः समभिव्यक्तिः। यथा बौद्धमतानुयायिनो **'बुद्धो धर्मः संघश्च'** इति रत्नत्रयमङ्गीकुर्वन्ति, एवं भेदवादिनस्तान्त्रिका अपि शिवः शक्तिः बिन्दुः इति रत्नत्रयं मन्यन्ते। शिवः पुरुषनाम्ना अथ च शक्तिर्मायानाम्नाऽप्यभिधीयते। शक्तेश्चापरं नाम 'एकोऽहं बहु स्याम्' इत्येवं रूपा इच्छा। बिन्दुश्च त्रिगुणात्मिका प्रकृतिरुच्यते। अयञ्च बिन्दु नादबीजभेदेन त्रिधा भिद्यते। उक्तञ्च––

**कालेन भिद्यमानस्तु स बिन्दुर्भवति त्रिधा।**
**स्थूलसूक्ष्मपरत्वेन तस्य त्रैविध्यमिष्यते।**
**स बिन्दुबीजनादभेदेन च निगद्यते॥**

––प्रपञ्चसार० तं० पट० १२, श्लो० ४३।

गुणत्रयात्मकाद् यो बिन्दुः समुत्पद्यते स स्थूलः, तन्मूलभूतश्च योः विन्दुः स सूक्ष्मः, क्षुभ्यमाणात् सूक्ष्मविन्दोः चेतनमिश्रो नादः समुत्पद्यते। उक्तञ्च––

**विन्दोस्तस्माद् भिद्यमानाद् रवो व्यक्तात्मको भवतु स एव श्रुतिसम्पन्नैः शब्दब्रह्मेति गीयते।**

बिन्दुसमुद्भूतश्चायं नाद एव परावाङ्नाम्ना व्यपदिश्यते। परादिवाचां स्वरूपविषये द्वैताद्वैतिनोरुभयोर्मते साम्यमपि विद्यते। परावाक् चेतनमिश्रा भुवनादिसृष्टिसमर्था च। विन्दोः संक्षोभात् समुद्भूतो योऽव्यक्तात्मको रवः, स एव नाभिहृदयादिदेशं क्रमशः उत्तरोत्तरं प्राप्य पश्यन्त्यादिरूपम् उपाधिमाश्रयति। विन्दोः शब्दात्मिका वृत्तिरेव परादिभेदेन चतुर्धारूपं भवति। सर्वप्राणिषु च आसां परादिवाचां सत्ता स्वीक्रियते। पुण्यापुण्यादिकर्मोपाध्यवच्छिन्नत्वात् प्राणिषु न्यूनाधिक्येन परादिवृत्तीनामुदयो दृश्यते परादिवृत्तीनां विषमरूपेण प्राणिषूदयात् कस्यचिज्ज्ञानमुत्कृष्टम्, कस्यचिच्च मध्यमं अपकृष्टं वा दृश्यते। परादिवाचाम् अतिक्रमणे सत्येव शिवत्वलाभो मोक्षः सम्प्राप्यते।

तदेव विन्दुः संक्षुब्धः सन् यथा इन्द्रियभोगभुवनादीनि सृजति, तथैव परादिध्वनिमपि। द्वैतमते परावाग्रूपो ध्वनिः विन्दोर्वृत्तिविशेषभूतः। अस्यातिक्रमणे सति मोक्षलाभः। यद्यपि त्रिगुणात्मकः सूक्ष्मो विन्दुः विशुद्धः सत्त्वगुणस्याधिक्यात् अद्वैतवादिनां मते तु परावाग्रूपो ध्वनिः, ब्रह्मणः स्वतन्त्राचिन्मयी शक्तिः। चित्तस्वरूपा इयञ्च वाक् पूर्वोक्तपूर्णाहन्तात्मना परमात्मन्यभेदेन विराजते। नित्यमभेदसम्बन्धस्य सत्त्वाच्च परब्रह्मापि तन्मयम्।

अत्र युक्तायुक्तत्वविचारः––

वस्तुतस्तु महाविन्दोरूर्ध्वं चित्कला यद्वा चिच्छक्तिः स्वच्छन्दतया परिक्रीडति। क्रीडेयं परायावाचो यद्वा परमात्मनो विलासरूपा। सा च परावाक् चिन्तनशून्या आत्माश्रिता अनपायिनी च। विशेषोपायैर्यदा मनः निःसङ्कल्पम् तदा चिदात्मरूपया परया वाचा सह तस्यानवरतरूपेण सम्बन्धः अखण्डानन्दश्चानुभूयेते। परमात्मनि गर्भीकृताशेषविश्वं चिन्मयम् अहमात्मकं यत्स्फुरणम्, तदेव प्रथमो ध्वनिः, स एव ध्वनिः परावाङ्नाम्ना आम्नातः। महाविन्दोः पराया वाचः जनित्वमसङ्गतं प्रतिभाति। कस्यचिदपि स्पन्द-

------------

१ योगिनीहृदयदीपिकायां मन्त्रसङ्केतनिरूपणे २१-२२तमेषु श्लोकेषु दीपिकासेतुबन्धाख्यटीकायामयं श्लोकः मानिनीशास्त्रसिद्धान्ततन्त्रात् समुद्धृतः।

नस्य यद्वा समुत्पत्तेर्ध्वनिशून्यत्वाभावात् । ब्रह्मणि 'एकोऽहं बहु स्याम्' इत्येवं स्पन्दनं यदा समभवत् तदव्यवहितक्षण एव ध्वनिरभूत् । किञ्च वैयाकरणलघुसिद्धान्तमञ्जूषायां शक्त्याश्रयनिरूपणावसरे यो नादाभिव्यक्तिक्रमो दृश्यते स अविचारितरमणीयः, मञ्जूषोक्तक्रमोऽधस्तात् समुद्धृतः--

ततोऽपरिपक्वप्राणिकर्मभिः कालवशात् प्राप्तपरिपाकैः स्वफलप्रदानाय भगवतोऽबुद्धिपूर्विका सृष्टिर्मायापुरुषौ प्रादुर्भवतः । ततः परमेश्वरस्य सिसृक्षात्मिका मायावृत्तिर्जायते । ततो बिन्दुरूपम् अव्यक्तं त्रिगुणं जायते । इदमेव शक्तितत्त्वम् । तस्य बिन्दोरचिदंशो बीजम् । चिदचितमिश्रोंऽशो नादः । चिदंशो बिन्दुरिति । अचिच्छब्देन शब्दार्थोभयसंस्काररूपाऽविद्या उच्यते ।

अस्माद् बिन्दोः शब्दब्रह्मापरनामधेयं वर्णादिविशेषरहितं ज्ञानप्रधानसृष्ट्युपयोग्यावस्थाविशेषरूपं चेतनमिश्रं नादमात्रमुत्पद्यते । एतज्जगदुपादानमेव एव पराऽऽदिशब्दैर्व्यवह्रियते । इति प्रोक्तम् ।

"अबुद्धिपूर्विका" इति नागेशोक्तघटकस्य अबुद्धिपदस्य 'परमेश्वरस्य स्वभावः लीलाच' इति पर्यायौ । स्वभावः कीदृग् इति चेत् बहुत्वभवनरूपः परिस्पन्दः । यद्वा रन्तुमिच्छारूपः तदुक्तं काशीखण्डे--

**यदेकलो न शक्नोसि रन्तुं स्वैरञ्चरप्रभो।**
**तदिच्छा तव योत्पन्ना सैषा शक्तिरभूत्तव॥**

अस्माद्विन्दोः शब्दब्रह्मापरनामधेयम् इति पूर्वोद्धृतनागेशवाक्ये 'अस्माद्विन्दोः' इत्यनेन त्रिगुणात्मकविन्दोर्ग्रहणम्, न तु त्रिदंशो विन्दुरित्यस्य । अत्र प्रक्रियायां पूर्वं रन्तुमिच्छा ततस्त्रिगुणात्मको बिन्दुः, ततश्चेतनमिश्रो नादः, इत्येवं क्रमः । रन्तुमिच्छारूपं परिस्पन्दजन्यत्रिगुणात्मकविन्दोरभिव्यक्त्युत्तरं नादः, समजनि। परायावाचः स्वरूपविषयेऽयमेव नागेशस्य सिद्धान्तः। परन्तु परायाः वाचोऽयं क्रमो विश्वासं न समारोहति । ब्रह्मणि एकोऽहं वहुस्याम्, इत्येवं यदा परिस्पन्दः समभूत् तदव्यवहितोत्तरमेव ध्वनिरभिव्यक्तः । कस्यचिदपि परिस्पन्दस्य ध्वनिशून्यत्वाभावात् । यद्वा कस्यचिदपि ध्वनेः स्पन्दशून्यत्वाभावात् । अतएव स्पन्दध्वनयोः अपृथकत्वमामनन्ति मनीषिणः। अतएव स्पन्दप्रदीपिकायां स्पन्दः सविन्मूलं ध्वनिरूपमिति बहुशो व्याख्यातः । किञ्च उभयोः साहचर्याद् ध्वनिरेव स्पन्दः, स्पन्द एव ध्वनिः इत्यपि व्यवहर्तुं शक्यते। तस्माद् ब्रह्मणि स्पन्दनस्य यद्वा सम्विद्शक्तेः त्रिकालाबाध्यत्वात् परायावाचश्च सम्बित्स्वरूपत्वात् शक्तिशक्तिमतोरभेदाच्च ब्रह्मणा सह तस्याः अद्वैतमेव समायातीति शम् ।

---

## 'उद्यमेन हि सिद्ध्यन्ति कार्याणि न मनोरथैः'

**कार्य परिश्रम से सफल होते हैं, केवल चाहने से नहीं । अतः सब पुरुषों को पुरुषार्थ करना चाहिये ।**

# वैदिकसाहित्यसौदामिनी

श्री वागीश्वरो विद्यालंकारः, साहित्याचार्यः

## पञ्चम उन्मेषः

### तत्र ध्वनिविमर्शः

चतुर्थोन्मेषे साङ्गोपाङ्गा व्यञ्जना निरूपिता । अथ व्यञ्जनालभ्यस्य अर्थस्य वाच्यार्थातिशायित्वे तस्य ध्वनित्वम् उत्तमकाव्यत्वं च प्राचीनाचार्यैः श्रीमदानन्दवर्धनप्रभृतिभिर्यत् प्रतिपादितं तत् तेषु बहुमानात् प्राप्तावसरं प्रस्तूयते--

**प्राचीनाः प्राहुराचार्या आनन्दवर्धनादयः,**
**ध्वनिं नामोत्तमं काव्यं व्यङ्ग्ये वाच्यातिशायिनि।।१**
**अतादृशे पुनर्व्यङ्ग्ये तुल्ये हीनादिकेऽथवा,**
**मध्यमं तु गुणीभूतव्यङ्ग्याख्यं संप्रचक्षते ।।२**

इह प्रथमं ध्वनेरेव प्रासङ्गिकत्वाद् गुणीभूतव्यङ्ग्याख्यं मध्यमं काव्यं केवलनामतो निर्दिश्य प्रकृतमनुसरामः । ध्वन्यतेऽस्मिन्निति ध्वनिनामकम् उत्तमं काव्यम् । ध्वन्यते इति ध्वनिर्यस्त्वलङ्कार-रसादिरूपोऽर्थः । ध्वनतीति ध्वनिः शब्दोऽर्थो वा । ध्वननं ध्वनिः शब्दादेर्व्यापारविशेषः । एवं ध्वनिपदं प्रकरणानुसारमनेकार्थकम् ।

**अभिधा लक्षणा मूलतयाऽऽदौ द्विविधो ध्वनिः ।**
**विवक्षितेऽपि वाच्येर्थेऽन्यनिष्ठे सोऽभिधोत्थितः ।।३**

अभिधामूलो लक्षणामूलश्चेति ध्वनिः प्रथमं द्विविधः । अभिधामूलध्वनौ वाच्यार्थो विवक्षितोऽप्यन्यपरको यतः स प्रधानप्रतिपाद्यस्य व्यङ्ग्यार्थस्य रसभावादेर्वा प्रतीतौ अङ्गतां गच्छति । ध्वनेर्द्वितीयो भेदो लक्षणामूलो यत्र लक्षणामूलत्वादेव बाधितस्य वाच्यार्थस्य न विवक्षा तादृूप्येण वोपयोगः । अतः स क्वचित् स्वकीय एव विशिष्टार्थे संक्रान्तो भवति, क्वचिन्मुख्यार्थस्य सर्वथा हाने तस्य अत्यन्ततिरस्कृतता वा । एवं लक्षणामूलोऽयं ध्वनिर्द्विविधः । अभिधाया मुख्यवृत्तित्वाद् यद्यपि तन्मूलो ध्वनिरेव प्रथमं स्थानमर्हति, तथापि लक्षणामूलयोर्ध्वनिभेदयोः स्वल्पविषयत्वाद् सूचिकटाहन्यायेन तयोरेव प्रथमं प्रतिपादनमुचितम् । लक्षणामूलध्वनेर्द्वौ भेदौ--

**ध्वनौ तु लक्षणामूले वाच्यर्थो न विवक्षितः ।**
**संक्रान्तः स्वविशिष्टाऽर्थेऽत्यन्तं वा स्यात् तिरस्कृतः ।।४।।**

अर्थान्तरसंक्रान्तो ध्वनिर्यथा--

**असमानमिवौजांसि सदसा गौरवेरितम् ।**
**नाम यस्याभिनन्दन्ति द्विषोऽपि स पुमान् पुमान् ।।**

किरातार्जु० ११.७३ ।।

अत्र प्रथमः पुमानिति शब्दः पुरुषमात्रार्थकः द्वितीयस्तु श्लाक्ष्यः पुमानिति तद्गुणविशिष्टपुरुषार्थकः, अन्यथा पुनरुक्तिदोषापत्तिः । एवम्--

**त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति ।**
**आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत् ।।**
**काव्यप्र४।२३।।**

इह संबोध्यस्य पुंसः पुरतः स्थित्यैव लभ्यत्वेऽपि 'त्वाम्' इति पदमनुपयुक्तं सद् विशेषतो ममोपदेशपात्रं त्वामिति, वक्तरि विद्यमानेऽपि अहमर्थकम् अस्मीति पदं तवाऽहम् अत्यन्तहिताभिलाषीति । एवं वच्मीति पदं सामान्यतया कथनमात्रपरमपि उपदिशामीति स्वरूपं स्वं स्वं विशिष्टमर्थं प्रति संक्रान्तम् । अस्मीति पदम्

अहमर्थे तिङन्तप्रतिरूपकम् अव्ययं प्रसिद्धम् ।
यथा वा--

**हत्वाय देवा असुरान् यदाऽऽयन् ।**
**देवा देवत्वमभिरक्षमाणाः ।।**

ऋ० १०।१५७।४

देवता विश्वेदेवाः, ऋषिः भुवन आप्त्यः साधनो वा भौमनः, छन्दः द्विपदा त्रिष्टुप्---

हत्वायेति-देवास्तेजसा प्रदीप्ताः सुक्षत्रियाः। देवत्वं रक्षमाणाः शत्रुं विजित्याऽपि तत्र निरपराध-प्रजा जनेषु स्त्रीषु च अत्याचारमकुर्वाणाः । असुरान् दुष्टशत्रून् हत्वाय निहत्य क्त्वो यक् ( पाणि० ७ १.४७ ) यदा स्वदेशमायन् आगच्छन्ति तदा ते यथार्था देवाः उच्यन्ते । अत्र द्वितीयं देवा इति पदं विशिष्टदेवपरकत्वात् अर्थान्तरसंक्रमितवाच्यम् ।।

तथा--

**परं मृत्यो अनुपरेहि पन्थां**
**यस्ते अन्य इतरो देवयानात् ।**
**चक्षुष्मते शृण्वते ते ब्रवीमि,**
**मा नः प्रजां रीरिषो मोत वीरान् ।।**

ऋ० १०.१८.१

देवता–मृत्युः । ऋषिः–संकसुको यामायनः । छन्दः–त्रिष्टुप् ।

परं मृत्यो इति मन्त्रेऽस्मिन् मृत्योः कश्चित् कल्पितोऽधिष्ठातृदेवश्चेतनव्यक्तिवत् सम्बोध्यते । सर्वदेवमयः परमेश्वरो वा । तदुक्तम्–'....एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः।' ऋ०१।१६४।४६। हे मृत्यो! देवयानात्(१) मार्गात् इतरो भिन्नो यस्ते अन्य एव मार्गोऽस्ति पितृयाणाख्यः । परा अस्मत्पराङ्मुखः सन् त्वं तम् मार्गं अन्विहि अनुसर । जितेन्द्रिया योगिनो विद्वांसो हि देवाः । ते येन यानेन जीवनसरण्या यान्ति व्यवहरन्ति तद्देवयानम् । तेन पथा गच्छतो मृत्युंजयान् मृत्युर्न निहन्ति । ते हि स्वेच्छया देहं जहति भीष्मादिवत् । इतरेण पितृयाणाख्येन पथा गच्छतो भोगिनो मर्त्यान् मृत्युर्हन्ति ते हि पुनः पुनर्म्रियन्ते जायन्ते च । हे मृत्यो ! यतो हि त्वं चक्षुष्मान् शृण्वंश्चासि तस्मात् चक्षुष्मते शृण्वते च ते ब्रवीमि। किं ब्रवीमि ? यत् त्वं नः प्रजां संततिपरम्पराम् वीरान् पुत्रांश्च मा रीरिषः मा हिंसीः ।। मृत्यौ चेतनव्यक्तित्वारोपे कृते तस्य विलोकनश्रवणशक्तिमत्त्वं नाऽनुपपन्नम् । इह चक्षुष्मते शृण्वते इति पदे न केवलं नेत्रवत्त्वं श्रवणवत्त्वमात्रमेव वाऽर्थं प्रतिपादयतः किन्तु तयोः प्रकर्षम् । अन्यथा प्रायः सर्वेषामेव प्राणिनां चक्षुरादिमत्त्वादिह तयोः पृथगुपादानं व्यर्थं स्यात् । एवं ब्रवीमीति पदमपि कथनस्य प्रार्थनारूपे स्वविशिष्टार्थे संक्रान्तम् ।

---

१–अग्नि ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्म विदोजनाः ।।
धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ।।
शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्यया वर्तते पुनः ।।
भग० गीता ।अ०८।श्लो०२४-२६

२– त्रयस्त्रिंशत्त्वेव देवाः इति । कतमे ते त्रयस्त्रिंशदिति ? अष्टौ वसवः+एकादशरुद्राः+द्वादशादित्यास्ते एकत्रिंशत्+इन्द्रश्च+प्रजापतिश्चेति त्रयस्त्रिंशाविति । अष्टौ वसवः-अग्निः+पृथिवी+वायुः+अन्तरिक्षम्+आदित्यः+द्यौ+चन्द्रमाः+नक्षत्राणि चेति=८। रुद्राः=पुरुषे१०प्राणाः+एकादश आत्मा=११। आदित्याः=द्वादशमासाः।=३३ ।
बृहदारण्यकोपनि०, अध्याय३।ब्राह्म२,३,४,

तथैव--

**तनूनपादसुरो विश्ववेदा देवो देवेषु देवः ।**
**पथो अनक्तु मध्वा घृतेन ॥ यजु०अ०२७।मं०१२॥**

देवता-विश्वेदेवाः । ऋषिः-अग्निः । छन्दः-वराड्गायत्री ।

तनूनपादसुर इति--तनूनपादग्निरितिशाकपूणिः । नपाद् इत्यनन्तरायाः प्रजाया नामधेयम् । आपोऽत्र तन्व उच्यन्ते, तता अन्तरिक्षे । ताभ्य ओषधिवनस्पतयो जायन्ते । ओषधिवनस्पतिभ्य एषः (अग्निः) जायते । निरु०८।२।५। ओषधयः कस्मात् ? ओषम् ऊष्माणं दधतीति । देहसम्बन्धादिह देहे स्थितस्य तापस्य नियतमात्रा जठराग्निर्वा तनूनपात् । स हि तनूं न पातयति पतनाद् रक्षतीत्यर्थः । अथवा--तनू+ऊन+पात् तन्वा ऊनं प्रतिक्षणं क्षीयमाणम् अंशं पाति पूरणात् पालयतीति । भुक्तैरोषधिवनस्पतिभिरैवाऽयमग्निर्देहे जन्यते धार्यते च । सोऽयं तनूनपात् असून् प्राणशक्ति ददातीत्यसुरः । शक्तिदानाद् द्योतनात् क्षुधादेर्दीपनाद्वाऽयमग्निर्देवः । न केवलं देवः प्रत्युत देवेषु देवपदवाच्येषु सर्वेषु प्राणेन्द्रियादिष्वपि देवः विशिष्टो देवः । अस्यैव माहात्म्येन प्राणा बलवन्तः, इन्द्रियाणि च स्वव्यापारक्षमाणि । अयमेव चक्षुषो दीप्तेः मुखस्य च कान्तेः कारणम् । जठराग्निमान्द्ये सर्वं गात्रं मन्दायते । अयमेव विश्वं विविधमन्नपानादिकं[1] विन्दति आत्मसात्करोतीति विश्ववेदाः । उक्तविधोऽयं देवः, नः पथो मध्वा घृतेन च अनक्तु अस्माकं जीवनपथं माधुर्येण स्नेहेन च सिञ्चतु । स्वस्थो जठराग्निरेव मानवस्य देहमनसोरारोग्यहेतुः । अजीर्णग्रस्तो जनोऽकारणक्रोधी उग्रस्वभावश्च भवति । देवो देवेषु देवः इत्यत्र प्रथमं देवपदं द्युतिदानाद् दीपनाद्वा देहाऽग्निपरकम् । द्वितीयं सामान्यतया आत्माग्निप्राणेन्द्रियादिपरकम् । देवो मेघे सुरे राज्ञि स्यान्नपुंसकमिन्द्रिये । इति मेदिनी । तृतीयं च तनू निरतिशयशक्तिकान्त्यादिप्रदानसमर्थस्य विशिष्टस्य देहाग्नेर्बोधकम् । तनूनपात्पदस्य व्युत्पत्तिः तन्वां देहे देहिभावमास्थाय न पततीति कर्तुमुचिता । इह देवो देवेषु देव इत्यत्र एकाधिकवर्णयो र्दकारवकारयो स्तेनैव क्रमेण असकृदावृत्त्या वृत्त्यनुप्रासः । किं च यज्ञमयं त्यागभावनया जीव्यमानं सुखिजीवनरूपं विषयं निगीर्य तस्य विषयिणा मधुना घृतेन च अभेदाऽध्यवसानादतिशयोक्तिरिति । ततश्चोभयोः शब्दार्थाऽलङ्कारयोः परस्परनैरपेक्ष्येण स्थितयोः संसृष्टिः ।

तथा--

**ये देवा देवेष्वधि देवत्वमायन्**
**ये ब्रह्मणः पुर एतारो अस्य ।**
**येभ्यो न ऋते पवते धाम किंचन,**
**न ते दिवो न पृथिव्या अधिस्नुषु ॥**
**यजु० अ०१७।मं०१४।**

देवता-प्राणः । ऋषिः-लोपामुद्रा । छन्दः-आर्षी जगती ।

ये देवा देवेष्वधि०--मन्त्रस्यास्य देवता प्राणः । प्राणपदमिह देहात्मरहितप्राणानामसंभवाद्--धर्मधर्मिभावसम्बन्धेन प्राणायामयोगाभ्यासादिभिः सम्यङ्नियन्त्रित--प्राणशक्ति जनं लक्षयति । ये नियन्त्रितप्राणशक्तयो महात्मानः, देवेषु देवोचितविद्यादिसद्गुणसंपन्नेषु जनेष्वपि देवत्वं विशिष्टम् असामान्यं देवत्वमध्यायन् अधिगच्छन्ति अधिकुर्वन्ति वा । ये चास्य ब्रह्मणो ब्रह्मविदां समाजस्य जगतो वा पुर एतारः अग्रगामिनो भवन्ति येभ्यो

-------------------

[1]--सोऽहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणाऽपानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥
भगवद्गीता ।१५.१४।

विना किमपि धाम स्थानं न पवते पवित्रं न जायते। तथाविधा असाधारणप्रभावा महानुभावा न दिवः न द्युलोकादवतरन्ति, न पृथिव्याः न पृथिवीतलमुद्भिद्य निर्गच्छन्ति, न वास्तुषु पर्वतानां सानुषु सानुभ्यः प्रादुर्भवन्ति, प्रत्युत सामान्यजनवत् मातुरेव गर्भाद् जन्म गृह्णन्ति। परस्तात् साधनया उद्योगेन च स्वसमुपार्जितगुणैस्तादृशं सर्वजनपूजनीयं महोच्चैः पदमवाप्नुवन्ति। धाम देहे गृहे रश्मौ स्थाने जन्मप्रभावयोः। इति मेदिनी। अत्रापि देवपदं पूर्वमन्त्रवत् स्वीय एवाऽर्थान्तरे संक्रान्तम्। "स्नुः प्रस्थः सानु रस्त्रियाम्।" इत्यमरः। उव्वटमहीधरौ तु मन्त्रमिमं प्राणपक्षे योजयन्तौ—'ये देवाः प्राणाऽपानादयः पञ्चप्राणाः देवेषु इन्द्रादिषु अधिष्ठातृत्वेन देवत्वम् आयन् प्राप्ताः। इन्द्रादीनामपि प्राणा देवाः। ये अस्य ब्रह्मणः जीवस्य पुर एतारः। प्राणा हि प्राणिनां पुरःसराः। क च येभ्य ऋते यान् प्राणान् विना किंचन धाम किमपि शरीरं न पवते न चेष्टते इत्थंभूता ये प्राणा देवास्ते पुनः क्वाऽऽसते? तत्राह—ते प्राणरूपा देवा न दिवः दिवि स्वर्गे न सन्ति। पृथिव्याः पृथिव्यां भूमावपि च न। सप्तम्यर्थे षष्ठ्यौ। किं तर्हि स्नुषु अधि 'स्नु प्रक्षरणे' स्नुवन्ति क्षरन्ति स्नूनि स्रोतांसि। चक्षुरादीनि प्राणायतनानि तेषूपलभ्यन्ते। तेषां स विशिष्टः प्रदेशः।" इत्याहतुः। धातुपाठे'स्नु प्रक्षरणे' रुपः कश्चिद् धातुर्नास्ति। स्नुप्रस्रवणे त्वस्ति। किन्तु मन्त्रे स्नु इति पाठदर्शनात् व्याख्येयं नातिरुचिरा प्रतिभातीति विपश्चितः स्वयं प्रमाणम्।

अथ यत्र प्रकृते सर्वथाऽनुपपन्नत्वाद् वाच्यार्थोऽत्यन्ततिरस्कृतो भवति तं लक्षणामूलध्वने द्वितीयं भेदं प्रस्तौति—

**उपकृतं बहु तत्र किमुच्यते**
**सुजनता प्रथिता भवता परम्।**
**विदधदीदृशमेव सखे सदा**
**सुखितमास्स्व ततः शरदां शतम्॥**
**काव्यप्रका० ४।२४।**

अपकारिणं प्रत्युक्तानि उपकृत-सुजनता-सुखितादीनि पदानि मुख्यार्थबाधात् स्वमर्थं सर्वथा परित्यज्य विपरीतलक्षणया अपकृत-दुर्जनता-दुःखिताद्यर्थान् लक्षयन्ति।

यथा वा—

**सुवर्णपुष्पितां पृथ्वीं विचिन्वन्ति नरास्त्रयः।**
**शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्॥**
**ध्वन्यालोके०॥**

पृथिव्यां सुवर्णमयपुष्पाणां, केनचिज्जनेन तेषां चयनस्य चाऽनुपपत्तेः, शूरकृतविद्यसेवाविचक्षणैरनायासेनैव प्रचुरधनोपार्जनं लक्ष्यते, तत्प्रकर्षव्यञ्जनं च गूढं फलम्। "सुवर्णपुष्पिताम्" इति पदम् अत्र काञ्चनकुसुमवतीति रूपं स्वमुख्यमर्थं सर्वथा तिरस्कृत्य विपुलैश्वर्यरूपे अर्थान्तरे संक्रान्तं भवति।

एवम्—

**पुष्पिण्यौ चरतो जङ्घे भूष्णुरात्मा फलेग्रहिः।**
**शेरेऽस्य सर्वे पाप्मानः श्रमेण प्रपथे हताः॥**
**ऐतरेयब्राह्मणे०।**

जङ्घयोः पुष्पित्वमनुपपन्नम्। तेन भ्रमणशीलस्य श्रमरतस्य अप्रमादिनः पुंसः सर्वत्र कृतकृत्यत्वं व्यज्यते। तथा पाप्मनां शयनक्रियाकर्तृत्वं न संभवति। उक्तं तु तत् पाप्मनां निष्क्रियत्वं व्यनक्ति। पाप्मपदमपि पापरूपं स्वमुख्यमर्थं परित्यज्य पापफलं दुःखभोगं लक्षयति।

क्रमशः

# सम्पादकीय टिप्पण्यः

## चीनदेशस्योत्थानम्

श्रूयते वृत्तपत्रेषु पठ्यते च यत् चीनदेशस्य सर्वक्षेत्रेषु महती समुन्नतिः संजाता । जातीयचारित्र्यमप्यनुकरणीयं समपद्यत । अस्माभिस्तस्य देशस्य यात्रा तु न विहिता परमन्ये यात्रिणः कथयन्ति यत् याचकस्तत्र नामशेषतां यातः । स्वदेहविक्रय जीविन्यः स्वैरिण्यश्चाप्यधुना नावलोक्यन्ते । चौरभयं च कुतो भवेत् वैयक्तिकसम्पत्तेरभावात् । आर्थिकक्षेत्रे स्वावलम्बनं तेषां मुख्योद्देश्यमासीत् परं तदर्थं न कस्यापि समक्षं तेन हस्तप्रसारणं विहितमिति धन्योऽयं देशः । या योजनापद्धतिस्तेनावलम्बिताऽसावैकतः गांधिपद्धतिरेवासीदिति निःसंशयं वक्तुं शक्यते । जनशक्तेरधिकाधिकमुपयोगो विधातव्य इति तेषां दृढ़निश्चयः । ग्रामस्तेषां पूर्णतः स्वावलम्बी भविष्यत्यचिरादिति प्रेक्षावतां विचारः । सामान्यजनोपयोगयोग्यानि वस्तूनि देशे सर्वत्र सममूल्यानि स्वल्पमूल्यानि च सन्ति । वेतनादिषु नाधिकं वैषम्यं तत्रेति श्रूयते । सर्वोच्चपदाधिकारिणोऽपि समये-समये कर्मकराणां संघेषु कृषकाणां च समूहेषु प्रविश्य कृष्यादिकं कुर्वन्ति । परमत्र भारते तु वातानुकूलितहर्म्येषु स्थित्वैव कृष्यादिक्षेत्रसम्बद्धसमस्यानां समाधानं विधीयते । महदाश्चर्यं यो देशः सर्वदेशानां गुरुरासीदसौ स्वचरित्रशिक्षणाय चीनादिदेशानां शिष्यत्वमवाप्तुमर्हति ।

## मधुशालाजालनद्धा उत्तरप्रदेशीया मत्स्याः

वृत्तपत्रेष्विदं पठित्वा महतीदं मनोव्यथा समजनि यदुत्तरप्रदेशसर्वकारोऽप्यस्मिन् प्रदेशे मधुशालानां जालानि प्रसारयितुं समीहते । यदि सत्यमेतत्तद् धिक्काराईमिदं जघन्यं कार्यम् । विगतकांग्रेसाधिवेशनभाषणेभ्योऽनुमीयते यत् केचन काँग्रेसीया मदिरापाने न कमपि दोषं गणयन्ति । किमयं महात्मगांधिराद्धान्तसम्मतः कांग्रेसः ? पुण्यश्लोकानां महात्मगांधिनां मन्तव्येभ्यो विसंवदते प्रवृत्तिरेषा शासकानाम् । मधुशालानिर्माणसम्बद्धैषा विचारसरणिः जातेरुन्मूलयित्री राष्ट्रविध्वंसकरी च । मधुपानार्जिता मुद्रा भौतिकोन्नत्यै गणयन्त्येते मुग्धा नेतारः । परं भोगविलासप्रवृत्ता मोहान्धा न विजानन्ति यत् सुरापानेन बुद्धिभ्रंशो-जायते बुद्धिनाशात् प्रणश्यति इति भागवतवचनं सदा स्मार्यम् । न केवलं सुरापानमेव देशे प्रससार परमन्यान्यपि गांजाभांगेत्यादीनि मोहान्धकाराणि नैकानि द्रव्याणि प्रचलितानि नैकाश्च मतिविभ्रमकरा यूनां तेजोहरा वलवीर्यविनाशिन्यो गुटिका अपि शत्रुभिः प्रसार्यन्ते, विशेषतः पञ्जाबहरयाणादि प्रदेशेषु । सावहितं श्रृणुत भो राष्ट्रनेतारः अनेन देशस्य क्षात्रशक्तिः ह्रासतां यास्यति ।

# संस्कारविधिः

लेखक–स्वामी दयानन्द सरस्वती
प्रकाशक–रामलाल कपूर ट्रस्ट, बहालगढ़, सोनीपत
सम्पादक–श्री युधिष्ठिर मीमांसक

मूल्य सजिल्द १०), अजिल्द ८)

ऋषि दयानन्दकृत संस्कारविधि का
आर्य समाज-शताब्दी संस्करण

श्रीमती माता भागवन्ती जी, धर्मपत्नी श्रीमान् हरिश्चन्द्र जी बत्रा ने अपने होनहार मेधावी व्यवहारपटु दूरदर्शी मितभाषी सत्यवादी सन्मार्गगामी आज्ञाकारी मातृ-पितृ-भक्त प्रभु-भक्त पुत्र सत्यप्रकाश, जिसे १९ वर्ष की अल्पायु में ही अकालमृत्यु ने सहसा उठा लिया, की स्मृति में प्रकाशित कराया है।

इस संस्करण में पूर्व संस्करणों की अपेक्षा कई विशेषताएं हैं जो कि संस्कार विधि के प्रारम्भ में इस प्रकार दी हैं—

१ सभी संस्करणों से मिलाकर "द्वितीय संस्करण" के आधार पर मूल पाठ का संरक्षण।

२ विविध संस्करणों में हुए परिवर्तनों एवं प्रक्षेपों को दूर करके मूल पाठ का स्थापन।

३ उद्धृत वचनों का ग्रन्थकाराभिमत शुद्ध पाठ व मूल स्थान का निर्देश।

४ मूल ग्रन्थ पर लगभग एक सहस्र टिप्पणियां।

५ प्रथम परिशिष्ट में विविध विषयों पर ३६ विवेचनात्मक टिप्पणियां।

६ उद्धरण की सुविधा के लिए प्रति पृष्ठ, पंक्ति-संख्या का निर्देश।

७ विषय की सुविधा के लिए ग्रन्थ का छोटे-छोटे सन्दर्भों में विभाजन वा अवान्तर शीर्षकों का निर्देश।

८ विविध संस्करणों का विवेचनात्मक सम्पादकीय।

९ ग्रन्थ का ऐतिहासिक विवरण।

१० अन्त में अत्युपयोगी १२ विशिष्ट परिशिष्ट (=सूचियां)

११ सुन्दर शुद्ध मुद्रण, बढ़िया कागज, पक्की सुन्दर जिल्द।

१२ लागतमात्र मूल्य–सजिल्द १०रु०, अजिल्द ८रु० (महंगाई के कारण)

भगवद्दत्त वेदालंकार

